# ऊरुभंगम्

## महाकविभासप्रणीतम्

सारस्वतवंशावतंसेन प्राच्यविद्यालयसाहित्य-
दर्शनशास्त्राध्यापकेन कवितार्किक-जैन-
न्यायविशारद-नृसिंहदेवशास्त्रिणा दर्श-
नाचार्येण रचितया सरलाख्यया
व्याख्यया समुल्लसितम्



प्राप्तिस्थानम्—

मोतीलाल बनारसीदास

अध्यक्ष—पंजाब संस्कृत पुस्तकालय

सैदमिट्ठा बाजार, लाहौर।

प्रथमसंस्करणम् १००० । मू० ॥)

# द्वित्राः शब्दाः

अयि ! सरस्वतीपरिचरणचणाश्चञ्चच्चटुल शेमुषीकाः ! पण्डितप्रकाण्डाः ! महाकविभासप्रणीतेषु अनेकेषु नाटकेषु ऊरुभङ्गाख्यमिदं नाटकं मोतीलाल बनारसीदासाभिधश्रेष्ठि-प्रेरणया प्राज्ञपरीक्षादित्सुच्छात्रजनहिताय सरलाख्यां व्याख्यां विरच्य योजितवानस्मि । अस्यादर्शपुस्तकमेकमेवोपलब्धम्, अनेकस्थलेषु त्रुटितमसंहितार्थञ्च यथाकथञ्चित्प्रपूर्य यथामति अर्थानुगतिकार्यम् । सन्ति चात्र साहित्यशास्त्रप्रदर्शिता अनेके दोषाः तथापि प्रथमाभ्यासपरस्यास्य महाकवे रूपकमार्गपरिष्कर्त्तुस्ते दोषत्वेननैवाकलनीया इत्युपैक्षिषि, तत्र तत्र व्याख्यायां मा नाम माननीयानां कृतिषु कटाक्षपातः स्यादिति । मुधा वाऽ-परिपक्वमतीनां प्राज्ञानां परिश्रमो माभूदिति च । यथामति यथावसरं शोधितोऽप्ययं ग्रन्थो यत्राक्षरादित्रुटित उपलभ्येत तत्र निजानुग्रहेण परिशोध्य मयि कृपां करिष्यन्ति विपश्चिद्वर्या इति साञ्जलि प्रार्थयते—

ता० १०। १। ३२ ई० { विदुषामनुचरः

नृसिंहदेवः

## अवश्यपठितव्यम् ।

केचिद् धूर्त्ताश्चोरयित्वा परस्वं
नाम स्वीयं वर्धयन्ते तिमूढाः ।
तेषां सङ्गस्तत्कृतिश्चापि विज्ञाः !
नोपादेयो नादरार्हेति वित्त ॥ १ ॥
येऽलङ्कारानन्यथा सन्नयन्ते
दोषज्ञाने शून्यगोष्ठीसगर्भ्याः ।
रीतिं त्यक्त्वा साधुवृत्तैर्विहीना-
स्ते किं मान्याः पण्डितानां सभासु ॥ २ ॥

# अस्मिन् रूपके पात्राणि

पुरुषाः—

राजा—दुर्योधनः।

धृतराष्ट्रः—दुर्योधनस्य पिताः।

अश्वत्थामा—द्रोणाचार्यस्य पुत्रः।

दुर्जयः—दुर्योधनस्य पुत्रः।

भटाः—सैनिकाः।

स्त्रियः—

गान्धारी—दुर्योधनस्य माता

देव्यौ—दुर्योधनस्य पत्न्यौ। एका मालवी, अपरा पौरवी।

---

## त्रुटयः—

पृ० २३—४र्थपङ्क्तौ "कुरुयदुकुल"—इति पठनीयम्।

पृ० २६—२३ पङ्क्तेरधः—अपहास्यमानम्=दुर्योधनेन कृतोपहासम्, स्थगितमिति तु निगूढम्। स्वमूल्म्=स्वसक्थि। अभिहत्य=ताडयित्वा। सञ्ज्ञाम्=चेष्टाम्। प्रयच्छति=ददाति। दुर्योधनं हन्तुं चेष्टाविशेषं दर्शयतीत्यर्थः।

पृ० ३५—२पङ्क्तौ—×"विपुलं केदार"—इति पठनीयम्। एतस्यैव टीकायान्तु—

"विपुले" इति सप्तम्यन्तपाठे तु उरसि इत्यस्य विशेषणं बोध्यम्। भीमस्य विशाले उरसीत्यर्थः।

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविभासप्रणीतम्

# ऊरुभंगम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः—

भीष्मद्रोणतटां जयद्रथजलां गान्धारराजह्रदां
कर्णद्रौणिकृपोर्मिनक्रमकरां दुर्योधनस्रोतसम् ।
तीर्णः शत्रुनदीं शरासिसिकतां येन प्लवेनार्जुनः
शत्रूणां तरणेषु वः स भगवानस्तु प्लवः केशवः ॥१॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

---

सरला

प्रणम्य परमात्मानं भक्ताभीष्टप्रदं मुदा ।
"ऊरुभङ्गे"ति विख्यातं रूपकं विवृणोम्यहम् ॥ १ ॥
ऊरुभङ्गीयसरलां ध्यात्वा प्राज्ञा यथासुखम् ।
तरन्तु प्राज्ञपाथोधिं सहायः केशवो हरिः ॥ २ ॥

श्रीवाल्मीकिव्यासादिमहाकविकल्पो भासो नाम महाकविः ऊरुभङ्गाभिधानं रूपककाव्यं चिकीर्षुः प्रयोगपरिपन्थिप्रत्यूह-प्रशमनकामः पूर्वरङ्गप्रधानाङ्गमङ्गलश्लोकपाठमुपक्रममाण

प्रयोगनिर्वाहस्य सकलभारवहेन सूत्रधारेण रङ्गे प्रथममनुष्ठेयं विचारयन् सूत्रधारस्य प्रवेशं तावदाचष्टे—'नान्द्यन्ते ततः प्रविशति सूत्रधार" इति। अत्र—

नान्दी=आनकः। "दुन्दुभिस्त्वानको भेरी भम्भा नासूश्च नान्द्यपि" इति वैजयन्तीकोशात्। अन्येषामपि वाद्यानां नान्दीत्युपलक्षणं ज्ञेयम्, तस्या नान्द्या अन्ते=प्रयोगस्य प्रथमेऽङ्गभूते आनकादिवाद्यानामवसाने सतीत्यर्थः।

अथवा—टुनदि समृद्धा वित्यस्मादौणादिके इप्रत्यये कृते "नन्दि" शब्दः, तस्या इयं "नान्दी" गीतवाद्यादिवादनात्मकं कर्म, तस्या अन्ते। एषा हि गीतवाद्यादिवादनरूपा क्रिया देवताप्रसादपूर्वकविघ्नोपशमार्थं प्रथमं पारिषद्यानन्दहेतुभूता अनुष्ठीयते, ततो रूपकमारभ्यते।

ततः=तदनन्तरम्, नान्दीसमाप्त्युत्तरकाले।

प्रविशति=प्रवेशं करोति, सूत्रधारः=सूत्रधारेतिख्यातो नटविशेषः। एतस्य लक्षणं यथा—

नाट्योपकरणादीनि सूत्रमित्यभिधीयते।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते॥

इत्यादि ज्ञेयम्।

प्रविष्टः सूत्रधारो मङ्गलं पठति—'भीष्मे'ति। 'सः केशवो भगवान् वः शत्रूणां तरणेषु प्लवोऽस्तु' इति सम्बन्धः। सः=लोकवेदप्रसिद्धः केशवः=श्रीकृष्णो भगवान्=षड्विधैश्वर्यसम्पन्नः वः=युष्माकं शत्रूणाम्=वैरिणां तरणेषु=पारकरणेषु अर्थात् विजयेषु (अत्र तरणशब्दो विजयार्थे लाक्षणिकः) प्लवः=पोतः अस्तु=भवत्वित्याशीः।

स कीदृश इत्यपेक्षायामर्थतस्तं विशेषयति—येन प्लवेन=सन्तरणसाधनभूतेन पोतेन अर्जुनः=मध्यमपाण्डवः शत्रुनदीम्=शत्रवः कौरवाः एव नदी सरित् तां तीर्णः=तस्याः पारं गतः, यमाश्रित्य शत्रून् विजिग्ये इत्यर्थः। कथम्भूतां शत्रुनदीम्-

भीष्मद्रोणतटाम्=भीष्मश्च द्रोणश्च भीष्मद्रोणौ तावेव तटौ यस्यास्ताम् । तथा—जयद्रथजलाम्=जयद्रथः दुर्योधनस्य दुःशलानाम्न्या भगिन्याः पतिः सिन्धुदेशानां राजा, स एव जलं यस्यां ताम्, तथा—गान्धारराजह्रदाम्=गान्धारराजः शकुनिरेव ह्रदो नद्यन्तर्गतो सगर्त्तो महाजलाशयो यत्र ताम्, तथा—कर्ण-द्रौणिकृपोर्मिनक्रमकराम्=कर्णो राधेयः, द्रौणिः अश्वत्थामा, कृपः कृपाचार्यः एतेषां द्वन्द्वः । कर्णद्रौणिकृपा एवोर्मयो नक्राः मकराश्च यस्यां तादृशीम्, तत्र ऊर्मयो महालहर्यः, नक्राः मकरा जलजन्तुविशेषाः, तथा—दुर्योधनस्रोतसम्=दुर्योधनः कौरवाणां राजा एव स्रोतः प्रस्रवणं यस्यां ताम्, तथा-शरासिकताम्=शरा बाणाः क्षिप्यन्ते एभिरिति शरासाः धनूंषि एव सिकताः वालुका यस्यां तां तथाविधां शत्रुनदीम् ।

"उडुपन्तु प्लवः कोलः" इति 'केशवो माधवः स्वभू' रिति चामरः । अथवा—

कश्च ईशश्च केशौ तौ वर्त्तयतीति "केशवः"। तथा च हरिवंशे कैलाशयात्रायां रुद्रेणोक्तम्—

"को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतावतः केशवनामवान्" इति ।

अत्र रूपकालङ्कारः । तदुक्तं साहित्यदर्पणे—
"रूपकं रूपितारोपाद्विषये निरपह्नवे" इति । परमिदं

"समस्तवस्तुविषयं" नाम ज्ञेयम्, अङ्गसहितस्याङ्गिनो नदीरूपस्य रूपणात् । विश्वनाथमतेनात्र "लाटी" रीतिः । "लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा स्थिता" इत्युक्तेः । गुणस्तु "प्रसादः"।

चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
सः प्रसादः समस्तेषु रसेषु रचनासु च (विश्व०) इति

लक्षणात् । परन्त्वस्मिन् रूपके ग्रन्थे प्रायः ओजोगुणस्य गौड्या रीतेश्च प्राधान्यमित्यग्रे तत्र तत्र ज्ञातं भविष्यति ।

किञ्च—उत्साहस्थायीभावो वीरो रसोऽत्राङ्गी, रौद्रादयोऽ-

( नेपथ्ये ) एते स्मो भो ! एते स्मः । (सूत्रधारः) भवतु विज्ञातम् ।

( प्रविश्य ) पारिपार्श्वकः-भाव ! कुतो नु खल्वे ते ।

---

ङ्गानि । नायको भीमसेनः, सच धीरोद्धतः । तल्लक्षणं यथा—

'मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।

आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः । इति ।

प्रतिनायको दुर्योधनः । दृश्यं काव्यमिदम् । यद्यप्यत्र नाटकस्य सर्वं लक्षणं न घटते तथापि रूपकस्य सामान्यलक्षणमस्त्येव । तथाचोक्तं विश्वनाथेन साहित्यदर्पणे—"दृश्यं तत्राभिनेयं स्याद्रूपारोपात्तु रूपकम्" इति ।

अस्यायमर्थः—अभिनेयं नामाभिनययोग्यं यत् तत् दृश्यं काव्यम् । तदेव नटे रामादिस्वरूपारोपाद् "रूपक" मित्यभिधीयते । अधिकं मत्प्रणीतायां कुन्दमालायाः "सौरभोल्लासिन्यां" "स्वप्नवासवदत्तादि" टीकायां वा द्रष्टव्यम् । इह प्राक्कथितं मत्वा न बहु प्रतानितम् । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

मङ्गलप्रयोगेणाभिमुखीकृतान् सामाजिकान् प्रति अभिनयकथांशं प्रतिजानीते—'एवमार्यमिश्रानि' त्यादि । एवम् अनेन= बुद्धिस्थेन प्रकारेण, आर्यमिश्रान्=अर्हत्तमान्, विज्ञापयामि= निवेदयामि ।

अथ यदा सूत्रधारेण विज्ञापनप्रतिज्ञा कृता तदा तदनन्तरमेव नेपथ्यस्थैस्तदीयवर्ग्यैस्तदभिप्रायमवुद्ध्वा कश्चित् शब्दः कृतः, सच तस्य शब्दस्यार्थोऽनवबोधमभिनयन् आह—"अये" इति ।

'अये" इति हर्षे, विषादे, सम्बुद्धौ च । किन्नु खलु=किं कारणम्, मयि=सूत्रधारे विज्ञापनव्यग्रे=विज्ञापनतत्परे सति, शब्द इव=विशेषरूपेणानिश्चितः कश्चन शब्दः श्रूयते=आकर्ण्यते । अङ्ग= हन्त, पश्यामि=आलोचये । अङ्गेति दर्शनरूपेऽर्थे सम्भ्रमं द्योतयति ।

"नेपथ्य" इति—नेपथ्यं नाम रङ्गस्थलव्यतिरिक्तं जवनिका-

स्वर्गार्थमाहवमुखोद्यतगात्रहोमा
नाराचतोमरशतैर्विषमीकृताङ्गाः।
मत्तद्विपेन्द्रदशनोल्लिखितैः शरीरै-
रन्योन्यवीर्यनिकषाः पुरुषा भ्रमन्ति ॥ २ ॥

न्तरितं वर्णिकापरिग्रहणयोग्यं नटवर्गस्थानम्। "नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्" इत्यजयः।

"एत" इति। एते पुरुषा इत्यर्थः। एतच्छ्रुत्वा सूत्रधार आह "भवत्वि"ति—प्राप्तकाले लोट्। शब्द इति शेषः। नेपथ्यादुत्थितः शब्दो भवितुं प्राप्तावसर एवेत्यर्थः। विज्ञातम्=शब्दविषयकं सर्वं पारिपार्श्वकप्रवेशवृत्तमवगतमित्यर्थः।

"पारिपार्श्वक" इति-अयं सूत्रधारसदृशः प्रधाननटविशेषः सूत्रधारस्य पार्श्वचर इत्यर्थः।

"भाव" इति। भाव=हे विद्वन्! इत्यर्थः। "भावो विद्वान्" इत्यमरः। "सूत्रधारं वदेद् भाव इति वै पारिपार्श्वक" (सा० द०) इति नाट्योक्तिसङ्केतः।

"कुतोन्वि"ति—कस्मात् कारणात् एते पुरुषा "भ्रमन्ती" त्यग्रिमेण सम्बन्धः।

"स्वर्गार्थे"ति—"एते पुरुषाः भ्रमन्ति" इति सम्बन्धः। पुरुषान् विशिनष्टि "स्वर्गार्थे' त्यादिना। स्वर्गार्थम्=स्वर्गः सुरलोकस्तदर्थं तत् प्राप्त्यर्थम्, आहवस्य सङ्ग्रामस्य मुखे मध्ये उद्यतः प्रारब्धः क्रियमाण इति यावत् गात्राणामङ्गानां होम आहुतिर्यैस्ते तादृशाः, तथा—नाराचानां सर्वलोहमयानां प्रक्ष्वेडनानां बाणविशेषाणां, तोमराणां सर्वलानामकानां शस्त्राणां ('गण्डासा' इति पञ्जाबी भाषा) शतैः असङ्ख्यातैर्नाराचादिभिरित्यर्थः विषमीकृतानि नतोन्नतानि जातानि नानाविधैर्व्रणैः

सूत्रधारः—मारिष ! किन्नावगच्छसि । तनयशतनयशून्ये दुर्योधनावशिष्टे धृतराष्ट्रपक्षे पाण्डवजनार्दनावशिष्टे युधिष्ठिरपक्षे राज्ञां शरीरसमाकीर्णे समन्तपञ्चके—

एतद्रणाहतगजाश्वनरेन्द्रयोधं
सङ्कीर्णलेख्यमिव चित्रपटं प्रविद्धम् ।
युद्धे वृकोदरसुयोधनयोः प्रवृत्ते
योधा नरेन्द्रनिधनैकगृहं प्रविष्टाः ॥ ३ ॥

( निष्क्रान्तौ, स्थापना )

---

प्रस्फुटितानीति यावत् एवम्भूतानि ( यानि ) अङ्गानि हस्तपादाद्यवयवा येषां ते तथाभूताः, तथा—मत्तानां मदस्राविणां द्विपेन्द्राणां महागजानां यानि दशनानि दन्ताः तैः उल्लिखितैः उत्कीर्णैः आहतैरिति यावत् शरीरैः=देहैरुपलक्षिताः, तथा-अन्योन्यं परस्परं वीर्यं बलमेव निकषः कषणपाषाणो येषां ते तादृशाः परस्परबलपरीक्षायां संलग्ना इत्यर्थः । एवम्भूताः पुरुषाः=राजपुरुषा योद्धारः भ्रमन्ति=इतस्ततो रणभूमौ सञ्चरन्ति ।

"अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः" इति, "शाणस्तु निकषः कष" इति, "प्रक्ष्वेडनास्तु नाराचाः" "सर्वला तोमरोऽस्त्रियाम्" इति च सर्वत्रामरः। "शरीरै" रित्यत्र—"इत्थम्भूतलक्षणे"( २ । ३ । २१ ) इति सूत्रेण "जटाभिस्तापस" इत्यादिवत् तृतीया ।

स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिरसौ चारु यथा वद्वस्तुवर्णनम्" ( का० दी० ) इति लक्षणात् ।

अत्र "गात्रहोमा' इति कथनाद्रणस्य वह्निरूपणं द्योतितम् । "वसन्ततिलका" वृत्तम् । "उक्ता वसन्ततिलका तभजा जगौग" इति तल्लक्षणात् ॥ २ ॥

सूत्रधारः पारिपार्श्वकं सम्बोधयति—"मारिष" इति । "सूत्र-

धारो मारिषेति" नाट्योक्तेः । किन्नावगच्छसि=किं त्वं न जानासि ?। "तनये"ति –तनयानां पुत्राणां शतं तनयशतं तस्य यो नयो द्यूतच्छलनादिरूपः कपटाचारः ( कपटनीतिः ) तच्छून्ये तद्रहिते, यस्मिन् पक्षे धृतराष्ट्रस्य शतसङ्ख्याकपुत्राणां कपटरूपानीतिर्न फलिता तत्रेत्यर्थः । दुर्योधनावशिष्टे=दुर्योधन एव अवशिष्टो यत्र तस्मिन्नेवम्भूते धृतराष्ट्रपक्षे सतीति शेषः ।

"पाण्डवे"ति–पाण्डवाः पञ्च युधिष्ठिराद्याः, जनार्दनः केशवः एते अवशिष्टा यत्र एवम्भूते युधिष्ठिरपक्षे सति ।

राज्ञाम्=भूपतीनाम्, शरीरैर्देहैः ( शवभूतैः ) समाकीर्णे=समन्ततो व्याप्ते, समन्तपञ्चके=कुरुक्षेत्रे (कुरुक्षेत्रान्तर्गतैतन्नामकरणभूमावित्यर्थः) अस्य पदस्याग्रिमश्लोकेन सम्बन्धः ।

"एतदि"ति—अत्र "रणक्षेत्र" मितिपदमध्याहार्यम्। "योधा एतत् रणक्षेत्रं प्रविष्टा" इति सम्बन्धः ।

योधाः=सैनिकाः, एतत्=समीपतरवर्त्ति रणक्षेत्रम्=सङ्ग्रामभूमिम्, प्रविष्टा=प्राप्ताः, कीदृश रणक्षेत्रम्—नरेन्द्रनिधनैकगृहम्=नरेन्द्राणां राज्ञां निधनस्य मृत्योः एकमद्वितीयं गृहं वासः, यत्र राजानो मृत्युगृहं प्रविशन्तीत्यर्थः, तथाच–वृकोदरसुयोधनयोः=भीमसेनदुर्योधनयोः युद्धे=सङ्ग्रामे ( वस्तुतस्तु ) सम्प्रहारे गदायुद्धे प्रवृत्ते=सम्प्रचलिते सति, रणाहत०=रणे युद्धे आहता हताहतीकृता गजाश्वनरेन्द्रयोधाः यस्मिन् तत्, तत्र–गजाः=हस्तिनः, अश्वा वाजिनः, नरेन्द्रा राजानः। योधाः सैनिकाः।

अतएव – प्रविद्धम्=प्रकर्षेण विद्ध वेधितं प्रस्फोटितं सङ्कीर्णलेख्यं=सङ्कीर्णानि परस्परं साङ्कर्यं प्राप्तानि लेख्यानि मूर्त्तानि यत्र तादृशं चित्रपटम्=प्रतिकृतिपत्रमिवेत्युपमा ।

यथा—चित्रपटं विविधाभिः शलाकाभिः प्रविद्धं सत् सङ्कीर्णलेख्यं जायते=छिन्नाङ्गप्रत्यङ्गमिवावभासते तद्वदिदं रणक्षेत्रं भातीति भाव । वसन्ततिलकावृत्तम् । लक्षणमुक्तं प्राक्॥ ३॥

( ततः प्रविशन्ति भटास्त्रयः )

सर्वे—एते स्मो भोः ! एते स्मः ।

प्रथमः—

वैरस्याकथनं बलस्य निकषं मानप्रतिष्ठागृहं
युद्धेष्वप्सरसां स्वयंवरसभां शौर्यप्रतिष्ठां नृणाम् ।
राज्ञां पश्चिमकालवीरशयनं प्राणाग्निहोमक्रतुं
सम्प्राप्ता रणसञ्ज्ञमाश्रमपदं राज्ञां नभः सङ्क्रमम् ॥४॥

---

"स्थापना" इति । प्रस्तावनेत्यर्थः । अस्या लक्षणन्तु—

प्रस्तावना स्थापनैतद्वुद्धिभास्यादिदमामुखम् ।
विदूषकनटीपारिपार्श्वकैः सह संलपन् ॥
स्तोकवीथ्यङ्गसहितान्यामुखाङ्गानि सूत्रकृत् ।
बीजयेद्यत्र नाट्यज्ञैरेषा प्रस्तावना मता ॥ इति ।

"तत" इति—सूत्रधारोक्त्यनन्तरमित्यर्थः ।

भटाः=योद्धारः । 'स्म' इति 'अस्' धातोर्लेटि उत्तमपुरुषे बहुवचनान्तम् । 'एते'—इति गद्यस्य अग्रिमेन पद्येनाऽभिसम्बन्धः । ' भोः एते वयं रणसञ्ज्ञमाश्रमपदं सम्प्राप्ताः स्मः" इत्यन्वय इत्यर्थः । रणः सङ्ग्रामः । रण इति सञ्ज्ञा नाम यस्य तत्—"रणसञ्ज्ञम्" आश्रमपदम्=आश्रमस्थानम् । यथाश्रमो मुनीनां विश्रमार्थं भवति, तथा वीराणां कृते रण एव विश्रमस्थानमित्याशयः । एतेन भटानां कातरताया अभावो व्यज्यते । आश्रमपदं वर्णयति—"वैरस्ये"ति ।

कथम्भूतमाश्रमपदम्—वैरस्य=शत्रुताया आकथनम्=आसमन्तात् कथ्यतेऽस्मिन् संयावादिरिति "आकथनं" कटाहः शत्रुतायाः कटाह इत्यर्थः । सङ्ग्रामे परस्परप्रहारादिना भटानां शत्रुता सम्यक् कथिता भवति, यथा कटाहे संयावः । अहन्तु—"वैरस्य कथनम्" इत्येवं पाठं समीचीनं प्रपद्ये । ततश्चायमर्थः—

कथ्यते पाच्यते (रोगनिवृत्त्यर्थम्) इति "कथनं" क्राथः, वैरस्य शत्रुतायाः कथनम्=क्राथः यथा क्राथपानेन रोगनिवृत्तिः, तथा सङ्ग्रामेणापि शूराणां वै रात्मकरोगनिवृत्तिर्भवति।

पुनः कीदृशमाश्रमपदम्—बलस्य=शौर्यस्य निकषम्=परीक्षोपलः, तथा—मानप्रतिष्ठगृहम्=मानः आत्मसमुन्नतिः, प्रतिष्ठा परेण क्रियमाणः सत्कारः, मानश्च प्रतिष्ठा च मानप्रतिष्ठे तयोर्गृहं निवासस्थानम्, यदि शूराः कातर्यं विहाय रणे प्रविष्टा म्रियेरन् यदि वा जयेयुः उभयथापि तेषां मानप्रतिष्ठयोः प्राप्तिः सङ्ग्रामद्वारेति युक्तं तस्य "गृह" कथनम्।

पुनः कीदृशम्—युद्धेषु=नानाशस्त्रैः सम्प्रहारेषु क्रियमाणेषु अप्सरसाम्=स्वर्गस्त्रीणां स्वयंवरसभाम्=[यस्यां सभायां कन्यायाः स्वयंवरार्थं राजान आहूयन्ते सा 'स्वयंवरसभा" इत्युच्यते तां स्वयंवरसभाम्, [रणसञ्ज्ञे आश्रमपदे प्रविष्टान् योद्धॄन् स्वयमेवागत्याप्सरसः संवृण्वते इति युक्तं तस्य स्वयंवरसभारूपणम्] पुनः कीदृशम्—नृणां मनुष्याणां शौर्यप्रतिष्ठाम्=शूरस्य भावः शौर्यं तस्य प्रतिष्ठा शौर्यप्रतिष्ठा ताम्।

यथा परीक्षात उत्तीर्णस्य तद्योग्यतासूचकं प्रशंसापत्रं, एवमेव रणेऽपि शूराणां शौर्यस्य बोधकं प्रतिष्ठैवेति भावः।

पुनः कीदृशम्—राज्ञां=नृपाणां पश्चिमकालवीरशयनम्=पश्चिमकाले प्राणात्ययसमये वीरशयनम्=वीरतासूचकमास्तरणम्।

अन्येषां मरणकाले भूमावासनं दीयते राज्ञां कृते तु रणभूमिरेव शयनम्। किंवा अन्यदा राजानो नानाविधेष्वास्तरणेषु शेरते, प्राणात्ययकाले तु तेषामिदमेव शयनं शोभते यद् "वीरशयन" मिति।

पुनः कीदृशम्—प्राणाग्निहोमक्रतुम्=प्राणानामग्निहोमनामकं क्रतुं यज्ञम्, [अग्निहोत्रनामके क्रतौ आज्यादिकं हविर्हूयते, अत्र तु शूराः स्वान् प्राणानेव हविःस्थानीयान् जुह्वतीति रणस्याग्निहोमक्रतुरूपणम्।

द्वितीयः—सम्यग् भवानाह ।

उपलविषमा नागेन्द्राणां शरीरधराधरा
दिशि दिशि कृता गृध्रावासा हतातिरथा रथाः ।

---

पुनः कीदृशम्—राज्ञां=भूमीश्वराणाम् नभःसङ्क्रमम्=नभःपदेन नभस्थः सूर्यो लक्ष्यते, सूर्यलोकप्राप्तिसाधनमित्यर्थः । तथाचोक्तं मनुना—

आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥

इति । महाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरवाक्यं च यथा—

द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ इति । अतो—

युक्तं रणक्षेत्रस्य नभःसङ्क्रमत्वख्यानम् ।

अत्र मालारूपं नाम रूपकालङ्कारः, एकस्मिन्नेव रणसञ्ज्ञे आश्रमपदे कथनत्वादीनामनेकधर्माणामारोपदर्शनात् । शार्दूलविक्रीडितं वृत्तम् । "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥

"स्वयंवरसभाम्" "शौर्यप्रतिष्ठाम्" इत्यनयोः स्त्रीत्वेऽप्यनुपसर्जनत्वेन आश्रमपदेन सह विशेष्यविशेषणभावो न विरुद्धः ॥४॥

द्वितीयः प्रथमस्य साङ्ग्रामिकीं वार्त्तामाकर्ण्य तदनुमोदनरूपेणैव संग्रामस्थितिं वर्णयति । "उपले"ति—क्रियामरणे=क्रियया परस्परशस्त्राघातरूपेण व्यापारेण मरणं मृत्युर्यत्र तादृशे रणे=युद्धे नागेन्द्राणाम्=महागजानां शरीरधराधराः=शरीराण्येव धराधराः पर्वताः, उपलविषमाः=उपलाः पाषाणाः तद्वत् विषमाः निम्नोन्नताः दुर्गमाः सन्तीति शेषः । तथा-दिशिदिशि=प्रतिदिशं सर्वत इत्यर्थः । गृध्रावासाः=गृध्राणां दाक्षाय्याणां महाचिल्लानामिति यावत् आवासाः=आश्रयाः, कृताः=सञ्जाताः ।

अवनिपतयः स्वर्गं प्राप्ताः क्रियामरणे रणे
प्रतिमुखमिमे तत्तत् कृत्वा चिरं निहता हताः ॥५॥

तृतीयः—एवमेतत्।

करिवरकरयूपो बाणविन्यस्तदर्भो
हतगजचयनोच्चो वैरवह्निप्रदीप्तः।

---

सर्वत्रैव दिक्षु निहतप्राणिनां शवदेहमांसमत्त गृध्रपङ्क्तिभिः स्वाधिकारस्थानान्येव कृतानीति निर्गलितोऽर्थः। तथा—हताति-रथाः=हता मृता अतिरथा महारथा योधा येषां ते तादृशा रथाः=अश्वयानानि वर्त्तन्त इति शेषः। किञ्च—अवनिपतयः=राजानः स्वर्गं=नाकलोकं प्राप्ताः, युद्धे मृतानां स्वर्लोकप्राप्तेः। तथाचोक्तं भगवता गीतायाम्—"हतो वा प्राप्स्यसि स्वर्गम्" इति। इमे=योद्धारः प्रतिमुखम्=मुखं मुखं प्रतीति प्रतिमुखं सम्मुखं तत्तत् कृत्वा=तत्तच्छस्त्राघातरूपं विविधं कर्म विधाय, निहताः=कृता-घाताः सन्तः चिरम्=बहुकालं हताः=मृताः सन्तीत्यर्थः। अथवा-"चिर"मिति पदस्य "तत्तत् कृत्वा" इति पदेनान्वयः चिरं=बहु-कालं यथा तथा तत्तत्=नानाविधशस्त्रास्त्राघातं कर्म कृत्वा=बहु-कालपर्यन्तं प्रयुद्ध्येत्यर्थो बोध्यः।

अत्र पादान्तयमकं नाम यमकालङ्कारः। तल्लक्षणं यथा—
सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते" इति।

वृत्तं "हरिणी"—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति लक्षणात्॥ ५॥

"तृतीयः" इति। तृतीयो योधः संग्रामं यज्ञरूपेण वर्णयितु-मारभते—"करिवरे"ति। करिवराणां महागजानां कराः शुण्डा-दण्डा एव यूपः स्तम्भो यत्र सः तथाविधः, बाणविन्यस्तदर्भः=बाणाः सायका एव विन्यस्ताः तत्र तत्र स्थापिता दर्भाः कुशा यत्र

ध्वजविततविमानः सिंहनादोच्चमन्त्रः
पतितपशुमनुष्यः संस्थितो युद्धयज्ञः ॥ ६ ॥

प्रथमः—इदमपरं पश्यतां भवन्तौ—

एते परस्परशरैर्हतजीवितानां
देहै रणाजिरमहीं समुपाश्रितानाम् ।

---

सः, हतगजचयनोच्चः=हताः मृता गजाः करिणः एव चयनानि इष्टकास्तैरुच्चः, तथा—वैरवह्निप्रदीप्तः=वैरं विद्वेष एव वह्निः अनलः तेन प्रदीप्तः प्रचण्डः, कुरुपाण्डवयोर्विद्वेष एव यत्र जाज्वल्यमानो वह्निरित्यर्थः । तथा—ध्वजविततविमानः=ध्वजाः केतव एव वितताः वि[illegible] विमाना व्योमयानानि यत्र सः, तथा—सिंहनादोच्चमन्त्रः=सिंहनादाः सिंहवद् गर्जना एव उच्चमन्त्राः उच्चैः पठितव्या ऋचो यत्र सः, तथा—पतितपशुमनुष्यः-पतिताः मृताः सन्तो भूमौ लेटिताः पशवः पशुभूता (यज्ञदेयबलिरूपाः) मनुष्या यत्र स तथाविधः युद्धयज्ञः=युद्धरूपो यज्ञः यागः संस्थितः= सम्प्रति समाप्त इत्यर्थः । अत्रापि रूपकालङ्कारः । अत्र "पतितपशुपदे" धर्मभ्रष्टकातर्यरूपार्थौ व्यनक्ति इति अनुचितार्थो दोषः । 'मालिनी" छन्दः । "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ ६ ॥

इदमिति — अपरम्=अन्यत् । पश्येताम्=अवलोकेयाताम् ।

"एते"इति—"एते विहङ्गा राज्ञां विभूषणानि शरीरशिथिलानि कुर्वन्ति" इति सम्बन्धः ।

अत्र=संग्रामस्थले एते=पुरोदृश्यमानाः विहङ्गाः=पक्षिणः, परस्परशरैः=परस्परस्य अन्योन्यस्य शरैः=बाणैः हतजीवितानाम्= हतानि नष्टानि जीवितानि प्राणा येषां तेषां मृतानामित्यर्थः, तथा—देहैः=शरीरैः शवभूतैरिति यावत् रणाजिरमहीम्=रणः समर एव अजिरं चत्वरं तस्य महीं पृथ्वीं समराङ्गणभूमि-

कुर्वन्ति चात्र पिशितार्द्रमुखा विहङ्गा
राज्ञां शरीरशिथिलानि विभूषणानि ॥ ७ ॥

द्वितीयः—

प्रसक्तनाराचनिपात-पातितः
समग्रयुद्धोद्यतकल्पितो गजः ।
विशीर्णवर्मा सशरैः सकार्मुको
नृपायुधागारमिवावसीदति ॥ ८ ॥

---

मित्यर्थः समुपाश्रितानाम्=प्राप्तानां राज्ञाम्=नृपाणां विभूषणानि=मुकुटादीनि मण्डनानि शरीरशिथिलानि=शरीरात् देहात् शिथिलानि स्खलितानि प्रच्यावितानि कुर्वन्ति=विदधते। कीदृशास्ते—पिशितेन मांसेन आर्द्रं क्लिन्नं मुखं येषां ते ।

गृध्राद्याः पक्षिणो मांसत्रोटनलोभान्मृतानां राज्ञां देहात्स्वचञ्च्वाकृष्य भूषणानि भूमौ पातयन्तीति फलितोऽर्थः ॥

करुणो रसः । वसन्ततिलकावृत्तम् । लक्षणमुक्तं प्राक् ॥७॥

"द्वितीयः" इति । अपरो योद्धा वर्णयतीत्यर्थः ।

"प्रसक्ते' ति—अत्र 'असौ" इति पदमध्याहार्यम् । "असौ गजो नृपायुधागारमिवाऽवसीदती"ति सम्बन्धः ।

प्रसक्त०=प्रसक्तानां योद्धृभिर्हननाय देहं लक्ष्यीकृत्य सञ्चालितानां पातितानां नाराचानां सायकविशेषाणां निपातेन वेधेन पातितः, तथा—समग्र०=समग्रस्य नानाविधस्य युद्धस्य रणस्य उद्यताय उद्यमाय कल्पितः सज्जीकृतः, तथा—विशीर्णवर्मा=विशीर्णं स्फुटितं वर्म कवचं यस्य सः तादृशः छिन्नकवचः, तथा-सशरः=( शरैर्बाणैः सहवर्त्तत इति ) सबाणः तथा—सकार्मुकः=कार्मुकं धनुस्तेन सह वर्त्तमानः एवं विशेषणविशिष्टो गजः=हस्ती, नृपायुधागारम्=नृपाणां शस्त्रगृहमिव अवसीदति=अवसादं प्राप्नोति क्लेशं भजत इत्यर्थः ।

तृतीयः- इदमपरं पश्येतां भवन्तौ ।

माल्यैर्ध्वजाग्रपतितैः कृतमुण्डमालं
रत्नैकसायकधरं रथिनं विपन्नम् ।
जामातरं प्रवहणादिव बन्धुनार्यो
हृष्टाः शिवा रथमुखादवतारयन्ति ॥ ९ ॥

सर्वे—अहो तु (नु) खलु निहतपतितगजतुरगनररुधिर-कलिलभूमिप्रदेशस्य विचित्रवर्मचर्मातपत्रचामरतोमरशर-कुन्तकवचक (ब)न्धादिपर्याकुलस्य शक्तिप्रासहाटकभिण्डि-

---

यथा राज्ञां शस्त्रागारं शत्रुभिर्लुण्ठितं सद् दुरवस्थां धारयते तद्वदयं शस्त्रविद्धो गजोऽपि क्लेशभागिति फलितोऽर्थः । उपमालङ्कारः । वंशस्थवृत्तम्—"जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ ८ ॥

"माल्यै"रिति—"शिवा रथिनं रथमुखाद् अवतारयन्ति" इति सम्बन्धः । हृष्टाः=प्रसन्ना शिवाः=शृगाल्यः ध्वजाग्रपतितैः= ध्वजस्य केतोः अग्रात् अग्रभागात् पतितैः स्खलितैः माल्यैः=शेखरैः कृतमुण्डमालम्=कृता सम्पादिता मुण्डमाला शिरोमाला शेखरकं यस्य स तम्, तथा-रत्नैकसायकधरम्= रत्नैर्मणिभिः सहितः एकश्चासौ सायको वाणस्तस्य धरं धारकं रत्नजटितवाणविद्धमित्यर्थः, अत एव विपन्नम्=मृतम्, रथिनम्= रथारूढं राजानं, ( योधं ) बन्धुनार्यः=बान्धवस्त्रियः प्रवहणात्= दोलाख्याद्यानविशेषात्, जामातरम्=दुहितुः पतिम् इव रथमुखाद्= रथस्य मध्यात्, किंवा रथस्य पुरोभागात् अवतारयन्ति=अधः समाकर्षन्ति । अत्रोपमालङ्कारः । वसन्ततिलकावृत्तम् । लक्षण-मुक्तं प्राक् ॥ ९ ॥

"अहो" इति । "अहो" विस्मये । "अहो ही च विस्मये" इत्यमरः । "खलु" वाक्यालङ्कारे ।

पालशूलमुसलमुद्गरवराहकर्ण-कणप-कर्पण-शङ्कु-त्रासिगदा-दिभिरायुधैराकीर्णस्य समन्तपञ्चकस्य प्रतिभयता ।

---

"अहो नु खलु समन्तपञ्चकस्य प्रतिभयता" इति सम्बन्धः । प्रतिभयता=भीषणता भयङ्करतेति यावत् । अतः समन्तपञ्चकस्य कीदृशी भयङ्करतेत्यर्थः । निहतेत्यादिषष्ठ्यन्तं पदं तस्य विशेषणम् ।

निहताः शस्त्रास्त्रैर्विद्धाः सन्तो मृता ( अत एव भूमौ ) पतिता ये गजतुरगनराः=हस्त्यश्वमनुष्याः तेषां रुधिरेण रक्तेन कलिलायाः घनीभूतायाः कर्दमभावं प्राप्तायाः भूमेः ( रणभूमेः ) पृथिव्याः प्रदेशाः भागविशेषा यत्र तस्य, तथा—विक्षिप्ताः इतस्ततो विकीर्णा ये वर्म × × × × कबन्धादयः तैः पर्याकुलस्य=व्याप्तस्य, तत्र—वर्माणि कवचानि, चर्माणि फलकानि, आतपत्राणि छत्राणि, चामराणि बालव्यजनानि, तोमराणि शर्वलाः, ( शर्वला तोमरोऽस्त्रियामित्यमरः ) शराः बाणाः, कुन्ताः प्रासाः, कवचाः उरश्छदाः, कबन्धाः छिन्नशिरस्का देहा आदिपदेनान्येषां रुण्डमुण्डादीनां ग्रहणम् । तथा—शक्त्यादिभिरायुधैः शस्त्रैः आकीर्णस्य समन्ततो विक्षिप्तस्य व्याप्तस्येत्यर्थः ।

तत्र—शक्ति कासूः, "बरछी"ति भाषा । प्रासाः कुन्ताः, हाटकं सुवर्णमुष्टिशस्त्रविशेषः, भिण्डिपालः=भिन्दिपालः सृगाख्य शस्त्रं येनाश्मगुलिकाः प्रक्षिप्यन्ते ( भिन्दिपालः सृगस्तुल्यौ इत्यमरः ) शूलं प्रसिद्धम्, मुसलम् अयोग्रम्, मुद्गरो द्रुघणः ( द्रुघणो मुद्गरघनौ इत्यमरः ) "गुर्ज" इति प्रसिद्धिः, वराहकर्णः शस्त्रविशेषः, कणपः=प्रासविशेषः, शङ्कुः कीलकास्त्रम्, त्रासिनी भयदा चासौ गदेति "त्रासिगदा" गदेतिनामकं प्रसिद्धं शस्त्रम् । गदायुद्धेनैव भीमसेनो दुर्योधनं हतवान् । तथा च गदापर्वणि श्रीकृष्णवाक्यम्—

"उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः" इत्यारभ्य

प्रथमः—इहहि,

रुधिरसरितो निस्तीर्यन्ते हतद्विपसङ्क्रमा
नृपतिरहितैः स्रस्तैः सूतैर्वहन्ति रथान् हयाः।
पतितशिरसः पूर्वाभ्यासाद् द्रवन्ति कबन्धकाः
पुरुषरहिता मत्ता नागा भ्रमन्ति यतस्ततः ॥१०॥

---

भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति।
अधर्मेण युध्यन्वै हन्यादेव सुयोधनम् ॥

"मायाविनञ्च राजान मायर्यैव निकृन्तनु" इत्यादि तत्र द्रष्टव्यम्।

"इहे"ति सङ्ग्रामभूमौ। रणभूमिमेव वर्णयति 'रुधिर-सरित' इति—हतद्विपसंक्रमाः=हतानां द्विपानां गजानां सङ्क्रमः संसरणं यत्र तादृश्यो रुधिरसरितः=रक्तनद्यः निस्तीर्यन्ते=पार्यन्ते अवशिष्टैर्योधैरिति शेषः।

तथाभूता रुधिरस्य नद्यः स्रवन्ति यत्र गजशवा अपि सन्तरन्तीतियुद्धस्य भयङ्करता व्यज्यते। किञ्च—नृपति-रहितैः=राजशून्यैः स्रस्तैः=मृतत्वादधःपतितैः सूतैः=सारथिभिः उपलक्षिताः हयाः=अश्वाः रथान् वहन्ति=स्वामिनां सारथी-नाञ्च मरणाद्धेतोः हयाः शून्यानेव रथान् इतस्ततो नयन्तीत्यर्थः।

पतितशिरसः=पतितानि छिन्नानि शिरांसि येषां ते कबन्धकाः=छिन्नशिरस्का देहाः रुण्डमुण्डा देहाः इत्यर्थः पूर्वाभ्यासात्=पूर्वो योऽभ्यासोऽर्थात् शिरःकर्त्तनात् प्राक्तनो यो धावनादिसंस्कारः तस्माद्धेतोः द्रवन्ति=इतस्ततः पलायन्ते।

मत्ताः=प्रमादिनो नागाः=गजाश्च पुरुषरहिताः=पुरुषैर्हस्ति-पकैर्योधैश्च रहिता विहीनाः यतस्ततः=यत्र वा तत्र वा नियन्तु-रभावाद् उच्छृङ्खलाः सन्तः भ्रमन्ति=पर्यटन्ति।

"कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्" इत्यमरः। 'कबन्ध-

द्वितीयः—इदमपरं पश्येतां भवन्तौ। एते—

गृध्रा मधूकमुकुलोन्नतपिङ्गलाक्षा
दैत्येन्द्रकुञ्जरनताङ्कुशतीक्ष्णतुण्डाः।
भान्त्यम्बरे विततलम्बविकीर्णपक्षा
मांसैः प्रवालरचिता इव तालवृन्ताः॥ ११॥

तृतीयः—एषा निरस्तहयनागनरेन्द्रयौधा
व्यक्तीकृता दिनकरोग्रकरैः समन्तात्।

---

मुदके रुण्डे कबन्धो राहुरक्षसो" रिति हैमः। "हरिणी" वृत्तम् लक्षणमुक्तं प्राक्॥ १०॥

अपरोऽपि योधः सङ्ग्रामदशां वर्णयति—"गृध्रा" इति। "एते—गृध्राः=दाक्षाय्याः पक्षिणो महाचिल्लाः अम्बरे=आकाशे मांसैः=मांसखण्डैः (तुण्डेषु सङ्गृहीतैः) प्रवालरचिताः=प्रवालैर्विद्रुममणिभिः रचिताः जटिताः तालवृन्ताः=तालवृक्ष-निर्मितव्यजनानि इव भान्ति=प्रकाशन्ते, कथम्भूता गृध्राः—मधूकमुकुलोन्नतपिङ्गलाक्षाः=मधूकस्य "महुआ" इति ख्यातस्य पुष्पस्य मुकुलवत् कलिकावत् उन्नतानि उच्चानि तथा पिङ्ग-लानि पीतवर्णानि अक्षीणि नेत्राणि येषां ते तादृशाः, तथा—दैत्येन्द्र०=दैत्येन्द्रो बलिः, तस्य यः कुञ्जरो हस्ती, तस्य नतो निम्नाग्रभागो योऽङ्कुशस्तद्वत् तीक्ष्णाः तुण्डा मुखत्रोटयो येषां ते तथाविधाः, पुनः कीदृशाः-वितत०=विततः विस्तारवन्तो लम्बा दीर्घाः, विकीर्णाः इतस्ततः सञ्चाल्यमानाः पक्षाः छदा येषां ते तादृशाः।

"मधूके तु गुडपुष्पमधुद्रुमौ" "दाक्षाय्यगृध्रौ" "अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम्" इति सर्वत्र अमरः। "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुम" इति (मेदिनी) विश्वः। वसन्ततिलकं वृत्तम्॥ ११॥

नाराचकुन्तशरतोमरखड्गकीर्णा
तारागणं पतितमुद्वहतीव भूमिः ॥ १२ ॥

प्रथमः—ईदृश्यामप्यवस्थायामविमुक्तशोभा विराजन्ते क्षत्रियाः । इह हि—

सत्रो(स्त्वो)द्वर्त्तितनेत्रषट्पदगणा ताम्रोष्ठपत्रोत्करा
भ्रूभेदाञ्चितकेसरा स्वमुकुटव्याविद्धसंवर्त्तिका ।

curved

"एषा" इति—निरस्त०=निरस्ता मृताः पतिता हयनागनरेन्द्रयोधाः अश्वगजराजभटाः यस्यां सा तादृशी, तथा—समन्तात्=सर्वतः ( चतसृष्वेव दिक्ष्वित्यर्थः ) दिनकरोग्रकरैः=दिनकरस्य सूर्यस्य उग्रैः करैः तीव्रैः मयूखैः व्यक्तीकृता=स्फुटीकृता स्फुटं प्रतीयमानेत्यर्थः, तथा—नाराचकुन्तशरतोमरखड्गैः कीर्णा व्याप्ता एषा=पुरो दृश्यमाना भूमिः पतितम्=आकाशात् प्रच्युतं तारागणम्=नक्षत्रसङ्घम् उद्वहति इव=धारयति इव । नाराचाद्याः पूर्वं व्याख्याताः ।

अत्र प्रकृतानां निहतहयादीनामप्रकृतकविप्रतिभोत्थापितपतिततारागणतादात्म्यसम्भावनरूपा स्वरूपोत्प्रेक्षा, भूमिकर्त्तृकतद्धारणरूपा वा क्रियोत्प्रेक्षा । "भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" ( सा० द० ) इति लक्षणात् । इव शब्दप्रयोगाच्चेयं वाच्या । वसन्ततिलकावृत्तम् ॥ १२ ॥

"ईदृश्याम्" इति—मरणावस्थायामपीत्यर्थः । अविमुक्तशोभाः=अविमुक्ता अपरिहृता शोभा द्युतिर्येषां ते, अविक्षतकान्तय इत्यर्थः । विराजन्ते=दीप्तिभाजो भवन्ति, क्षत्रियाः=राजन्याः क्षत्रियाणां कृते युद्धे मरणमपि उभयलोक-श्लाघाकृदिति भावः ।

"सत्रो(स्त्वो)द्वर्त्तिते" ति । "एषा निष्कम्पा=पृथिवी राज्ञाम्=भूपतीनाम्, अभीतैः=भयशून्यैः मुखैः=आस्यैः स्थलपद्मिनी इव=स्थलकमलिनीव रचिता=निष्पादिता" इत्यन्वयः । स्त्रीलिङ्गानि प्रथमान्तानि पदानि

वीर्यादित्यविबोधिता रणमुखे नाराचनालोन्नता
निष्कम्पा स्थलपद्मिनीव रचिता राज्ञामभीतैर्मुखैः १३॥

द्वितीयः—ईदृशानामपि क्षत्रियाणां मृत्युः प्रभवति। न शक्यं खलु विषमस्थैः पुरुषै राजकुला (दा-धा)नं कर्त्तुम्।

---

"निष्कम्पा" इत्यस्य विशेषणानि। कथम्भूता निष्कम्पा—सत्रो(त्वो)-द्वर्त्तितनेत्रषट्पदगणा=सत्रे युद्धयज्ञे (सत्त्वेन बलेन) उद्वर्त्तितानि विस्फुलितानि नेत्राणि चक्षूंषि एव षट्पदानां भ्रमराणां गणः समुदायो यत्र सा, पुनः कीदृशी—ताम्रोष्ठपत्रोत्करा=ताम्राः शोणितवर्णा ओष्ठा एव पत्रोत्कराः=दलव्राता यस्यां सा तादृशी, तथा—भ्रूभेदाञ्चित-केसरा=भ्रूभेदा नानाविधा भ्रुवः एव अञ्चिता व्याप्ता (व्यत्र-कीर्णाः) केसराः किञ्जल्का यस्यां सा, तथा—स्वमुकुट०=स्वेषा—मर्थात् राज्ञामेव यानि मुकुटानि किरीटानि तान्येव व्याविद्धाः किञ्चिद्विकसिताः संवर्त्तिकाः नवदलानि यस्यां सा, तथा—वीर्यादित्यविबोधिता=वीर्यं क्षात्रं बलमेव आदित्यः सूर्यः तेन विबोधिता विकाशं नीता, तथा—नाराचनालोन्नता=नाराचा बाणा एव नीलानि कमलदण्डास्तैरुन्नता ऊर्द्ध्वमुखी।

अयमाशयः—कमलिन्यां भ्रमराः, पत्रोत्कराः, केसराः, संवर्त्तिकाः सम्भवन्ति, सा पुनः सूर्येण विकास्यते नालेन चोन्नीयते, तदिदं सर्वं स्थलकमलिन्यास्तादात्म्यं रणभूमावा-रोपितम्। अतः समस्तवस्तुविषयारोपणात्साङ्गमिदं रूपकम-लङ्कारः। लक्षणमुक्तं प्राक्। 'निष्कम्पा" इत्यत्र नेयार्थतादोषः।

(कोष०) "सत्रं यज्ञे सदादानच्छादनारण्यकैतवे" इति मेदिनी। "किञ्जल्कः केसरोऽस्त्रियाम्" संवर्त्तिका नवदलम्" "अथ मुकुटं किरीटं पुन्नपुंसकम्" इति सर्वत्रामरः। "नालं काण्डे मृणाले च नालीशाककलम्बके" इति हैमः। शार्दूल-विक्रीडितं वृत्तम्। "सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्री-डितम्" इति लक्षणात्॥ १३॥

तृतीयः—किं प्रभवति क्षत्रियाणामिति ।

प्रथमः–कः संशयः ।

द्वितीयः—मा मा भवानेवम् ।

स्पृष्ट्वा खाण्डवधूमरञ्जितगुणं संशप्तकोत्सादनं
स्वर्गाक्रन्दहरं निवातकवचप्राणोपहारं धनुः ।
पार्थेनाऽद्य बलान्महेश्वररणक्षेपावशिष्टैः शरै-
र्दर्पोन्सिक्तवशा नृपा रणमुखे मृत्योः प्रतिग्राहिताः १४॥

---

"द्वितीय" इति । द्वितीयो भटः किञ्चिद्विस्मयेनाह–"ईदृशाना" मिति । ईदृशानां=महाबलशालिनामित्यर्थः । क्षत्रियाणाम्=राजन्यानाम्, मृत्युः=कालः, प्रभवति=हन्तीत्यर्थः । क्षत्रियाणामिति सम्बन्धविवक्षया षष्ठी । स्वचिन्तितेऽर्थे तर्कनां प्रकाशयति— "नशक्य"मिति । विषमस्थैः=कष्टां दशां प्राप्तैः पुरुषैः=नरैः राजबलादा(धा)नम्=राज्ञां बलस्य आदा(धा)नं समन्ततो विनाशः (साहाय्यं वा) कर्त्तुं न शक्यमित्यन्वितार्थः । "खलु" इति निश्चये ।

अतिकष्टां दशां प्राप्ताः पाण्डवपक्षीयाः कथं महतां बलशालिनां राज्ञां विध्वंसने समर्थाः सञ्जाता इति गूढोऽभिप्रायो द्वितीयस्य । तृतीयोऽपि द्वितीयपक्षमनुमोदते प्रश्नव्याजेन 'किं प्रभवती"ति । अत्र मृत्युरिति कर्त्तृपदमनुषञ्जनीयम् । प्रथमः उक्तमर्थं स्वसम्मत्या दृढीकुर्वन्नाह—"कः संशय" इति । ईदृशां राज्ञामुपर्यपि मृत्युः प्रभवतीति नात्र कोऽपि सन्देह इत्यर्थः ।

द्वितीयः मृत्योः (तृतीयः) प्रभुतायां कञ्चन विशिष्टं कारणं प्रकटीकर्त्तुमाचष्टे "मामा" इति । मृत्योः स्वकीयं किञ्चित्सामर्थ्यं नास्ति किन्तु गाण्डीवधनुष एव कश्चनालौकिकः प्रतापः । तथाच दर्शयति—"स्पृष्ट्वा" इति । अद्य पार्थेन=अर्जुनेन खाण्डवधूमरञ्जितगुणम्=खाण्डवाख्यवनस्य दाहेनोत्पन्नो यो धूमः तेन रञ्जितः धूसरितः गुणः प्रत्यञ्चा यस्य तत् तादृशम्,

तथा—संशप्तकोत्सादनम्=संशप्तकानां त्रैगर्त्तानां उत्सादनं विध्वंसकरम्, तथा—स्वर्गाक्रन्दहरम्=स्वर्गस्य नाकलोकस्य य आक्रन्दो विलपनं तस्य हरं हर्त्तृ, तथा—निवात०=निवातकवचानां षष्ठिसहस्रसङ्ख्यानां यत्तविशेषाणां प्राणा असव एव उपहार उपायनं यस्य तत्, निवातकवचक्षयकरमित्यर्थः । एतादृशविशेषणविशिष्टं धनुः=गाण्डीवाख्यं कार्मुकं स्पृष्ट्वा=आदाय, महेश्वररणक्षेपावशिष्टैः=महेश्वरो महादेवः किरातरूपधृक् तेन सह यो रणः सङ्ग्रामः तस्मिन् क्षेपात् सञ्चालनात् अवशिष्टैः=शेषभावं प्राप्तैः शरैः=सायकैः दर्पोत्सिक्तवशाः=दर्पस्याहङ्कारस्य यदुत्सिक्तमुद्रेको वृद्धिरिति यावत् तद्वशाः तदधीनतां प्राप्ता अत्युद्धता इत्यर्थः एवम्भूता नृपाः=राजानः रणमुखे=समरमध्ये बलात्=बलमाश्रित्य मृत्योः=यमस्य प्रतिग्राहिताः=नीताः यमलोकं प्रतिगमिता हता इत्यर्थः ।

यद्यपि तादृशबलिनां राज्ञामुपरि मृत्योः प्रभावो भवितुं न शक्त आसीत्, तथापि महेश्वरादिविजयिनोऽर्जुनस्य बलेनैव मृत्युलोकं प्राप्ता एते क्षत्रिया इति मृत्योरप्यधिकंबलवानर्जुन इत्यतिशयोक्तिर्व्यज्यते । खाण्डवदाहकथा महाभारते आदिपर्वणि खाण्डवदाहपर्वणि अनेकैरध्यायैर्वर्णिता ।

एवमुक्तस्तु भगवान्धूमकेतुर्हुताशनः
चिन्तयामास वरुणं लोकपालं महेश्वरम् ॥

( २२७ ) सप्तविंशत्यधिकद्विशततमाऽध्यायसमाप्तौ च यथा—
ततोऽर्जुनो वेगवद्भिर्ज्वलिताग्रैरजिह्मगैः ।
शरैर्विध्वंसयामास गिरेः शृङ्गं सहस्रधा ॥
गिरेर्विशीर्यमाणस्य तस्य रूपं तदा बभौ ।
सार्कचन्द्रग्रहस्येव नभसः परिशीर्यतः ॥
तेनाभिपतता दावं शैलेन महता भृशम् ।
शृङ्गेण निहतास्तत्र प्राणिनः खाण्डवालयाः ॥

इति ।

सर्वे—अये ! शब्दः ।

किं मेघा निनदन्ति वज्रपतनैश्चूर्णीकृताः पर्वताः-
निर्घातैस्तुमुलस्वनप्रतिभयैः किं दार्यते वा मही ।
किं मुञ्चत्यनिलावधूतचपलक्षुब्धोर्मिमालाकुलं
शब्दं मन्दरकन्दरोदरदरीः संहत्य वा सागरः ॥१५॥

भवतु पश्याम स्तावत् ।

( सर्वे परिक्रामन्ति )

---

संशप्तकवधकथा तु द्रोणपर्वणि (१७) सप्तदशाध्यायादारभ्य (३२) द्वात्रिंशाध्यायान्तं विज्ञेया। तथाचोक्तं प्रसङ्गसमाप्त्यवसरे-

एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम् ॥
तावकानां परेषाञ्च त्यक्त्वा प्राणानभूद्रणः ।
पदातिरथनागाश्वा गजाश्वरथपत्तिभिः ॥ इत्यादि ॥

"बलात्" इत्यत्र "ल्यब्लोपे कर्मण्यधिकरणे च" ( वा० ) इत्यनेन कर्मणि पञ्चमी। "उत्सिक्त" मित्यत्र भावे क्तः। शार्दूलविक्रीडितं वृत्तम्। लक्षणमुक्तं प्राक् ॥ १४ ॥

"अये" इति। अव्ययपदमिदं क्रोधे, विषादे सम्भ्रमे, स्मरणे, सम्बुद्धौ च। प्रकृते सम्भ्रमोऽर्थः । सर्वे सम्भ्रान्ताः श्रुतं शब्दं तर्कयन्ते "किं मेघा" इति—मेघाः=घनाः किं निनदन्ति=गर्जन्ति, किंवा—वज्रपातनैः=अशनिपातैः चूर्णीकृताः=पिष्टपिष्टीकृताः पर्वताः= महीधराः "निनदन्ति" इति पूर्वेणानुषङ्गः । तुमुलस्वनप्रतिभयैः= तुमुलस्वनेन तीव्रेण स्वनेन प्रतिबिम्बितशब्देन प्रतिभयैः भीतिजनकैः निर्घातैः=वाय्वभिहतवायुप्रतापजन्यशब्दविशेषैः किं मही= पृथ्वी दार्यते=उत्पाट्यते, किंवा सागरः=समुद्रः मन्दरकन्दरोदरदरीः= मन्दरस्य मन्दराचलस्य याः कन्दरा गुहाः गृहाकाराणि विवराणि तासामुदरस्य मध्यभागस्य या दरीः संहत्य=सम्भिद्य, अनिला०= अनिलेन वायुना अवधूताः कम्पिताः अतएव चपलाश्चञ्चलाः

प्रथमः—अये! एतत्खलु द्रौपदीकेशघर्षणात्रमर्षितस्य पाण्डवमध्यमस्य भीमसेनस्य भ्रातृशतवधक्रुद्धस्य महाराजदुर्योधनस्य च द्वैपायनहलायुधकृष्णविदुरप्रमुखानां यदुकुलदैवतानां प्रत्यक्षं प्रवृत्तं गदायुद्धम्।

---

क्षुब्धाः क्षोभं प्राप्ता या ऊर्मयो लहर्यः तासां मालाभिः परम्पराभिराकुलं विह्वलं यथा स्यात्तथा शब्दं=गर्जनां मुञ्चति=त्यजति, अथवा शब्दस्यैवेदं विशेषणम्। एवम्भूतं शब्दं सागरो मुञ्चति।

अत्र सन्देहालङ्कारः—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थित" इति लक्षणात्। शार्दूलविक्रीडितं वृत्तम्॥ १५॥

"प्रथम" इति। "अये" इति विस्मये विषादे वा। "एतद् गदायुद्ध प्रवृत्तम्" इति सम्बन्धः।

"खल्वि"ति वाक्यालङ्कारे। "द्रौपदी"ति—द्रौपद्याः याज्ञसेन्याः केशानां शिरोवालानां (वेणीनामित्यर्थः) घर्षणेन आकर्षणेन अवमर्षितस्य अत्यन्तं क्रुद्धस्य भीमसेनस्य। 'मध्यमपाण्डवस्ये"ति तस्य युवराजत्वं बोधयति। "भ्रातृशते"ति—भ्रातृशतस्य यो वधः तेन क्रुद्धस्य महाराजदुर्योधनस्य।

यद्यपि-'क्रुद्धावमर्षित" पदयोर्वाच्यार्थे न विशेषः तथाप्यवोपसर्गसामर्थ्याद् 'अवमर्षित" पदेन भीमसेनस्य दुर्योधनापेक्षया क्रोधातिशयो व्यज्यते इत्यस्ति सहृदयैकवेदनीयम्। "द्वैपायने"ति—द्वीपमयनं स्थानं जन्मभूमिर्यस्य स 'द्वीपायनः" स एव 'द्वैपायनः" प्रज्ञादित्वादण् (५।४।३८)। "द्वीपे न्यस्तस्तया बालस्तस्माद् द्वैपायनोऽभवद्" इति पुराणम्॥ हलायुधः=बलभद्रः श्रीकृष्णस्य ज्येष्ठो भ्राता। शिष्टं स्पष्टम्। "कुर्वि"ति-कुरुयदुकुलयोर्दैवतानां देवतावत्पूज्यतमानां मुख्यानामित्यत्र तात्पर्यम्। द्वैपायनो व्यासः।

द्वितीयः-—

भीमस्योरसि तप्तकाञ्चनशिलापीने प्रतिस्फालिते
भिन्ने वासवहस्तिहस्तकठिने दुर्योधनांसस्थले ।
अन्योन्यस्य भुजद्वयान्तरतटेष्वासज्यमानायुधे
यस्मिंश्चण्डगदाभिघातजनितः शब्दः समुत्तिष्ठति १६॥

तृतीयः-एष महाराजः ।

शिष्टो(शीर्षो)त्कम्पनवल्गमानमुकुटः क्रोधाधिकाचानन:
स्थानाक्रामणवामनीकृततनुः प्रत्यग्रहस्तोच्छ्रयः ।

---

अथ गदायुद्धमेव वर्णयति—'भीमस्ये'त्यादिना । तप्तकाञ्चनशिलापीने=तप्ता अग्निशुद्धा या काञ्चनाशिला सुवर्णप्रस्तरः तद्वत् पीने पीवरे कठोरे भीमस्य उरसि=उरःस्थले प्रतिस्फालिते=प्रत्याहते सति, तथा—वासवहस्तिहस्तकठिने=वासव इन्द्रः, तस्य हस्ती ऐरावतः, तस्य यो हस्तः शुण्डादण्डः तद्वत्कठिने पीने दुर्योधनांसस्थले=दुर्योधनस्य स्कन्धप्रदेशे भिन्ने=भीमगदया आताडिते सति, अन्योन्यस्य=परस्परस्य (भीमसेनदुर्योधनयोरित्यर्थः) भुजद्वयान्तरतटे=भुजयोर्द्वयं भुजद्वयं वाहुयुगलं तस्यान्तरं मध्यभागएव तटस्तस्मिन् आसज्यमानायुधे=आसज्यमानानि आहन्यमानानि आयुधानि यत्र तादृशे यस्मिन्=गदायुद्धे चण्डगदाभिघातजनितः=चण्डस्तीक्ष्णो यो गदाया अभिघात आताडः तेन जनितः उत्पन्नः शब्दः=तडतडाध्वानः समुत्तिष्ठति=सर्वासु दिक्षु प्रसरतीत्यर्थः ।

"स्फल" चाले धातुस्तुदादिरिति कविकल्पद्रुमः । अत्रोपसर्गबलादाहननमर्थः । आहननेन स्वस्थानात्सञ्चालिते इत्यत्र तात्पर्यम् । "समुत्तिष्ठति" इत्यत्र नात्मनेपदम् "उदोऽनूर्ध्वकर्मणि" (१।३।२४) इति वचनात् । "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । उक्तमेव वृत्तम् ॥ १६ ॥

तृतीयो गदायुद्धासक्तं दुर्योधनं वर्णयति "शिष्टो(शीर्षो)त्कम्पने"ति—

यस्यैषा रिपुशोणितार्द्रकलिला भात्यग्रहस्ते गदा
कैलासस्य गिरेरि(वोग्रचरिताद्धोता)महेन्द्राश(नि?)निः १७

प्रथमः—एष सम्प्रहाररुधिरसिक्ताङ्गस्तावद् दृश्यतां पाण्डवः ।

निर्भिन्नाग्रललाटवान्तरुधिरो भग्नांसकूटद्वयः
सान्द्रैर्निर्गलितैःप्रहाररुधिरैरार्द्रीकृतोरःस्थलः ।

---

अस्य श्लोकस्य पाठः प्रायोऽलग्नकः, अतः कथञ्चित्पाठभेदं परिकल्प्य व्याख्यायते । यस्य=महाराजस्य रिपुशोणितार्द्रकलिला=रिपोर्भीमस्य शोणितेन रुधिरेण आर्द्रा क्लिन्ना साचासौ कलिला ।

एषा गदा अग्रहस्ते=हस्तस्याग्रभागे कैलाशस्य गिरेः=कैलाशाख्यस्य पर्वतस्य "अग्रशिखरोद्धूता"=पुरोवर्त्तिशृङ्गात् उद्धूता उत्थिता महेन्द्राशनिः इव=देवराजस्य वज्रमिव भाति=प्रकाशते, स एष महाराजः शीर्षोत्कम्पनवल्गमानमुकुटः=शीर्षस्य शिरसः उत्कम्पनेन ऊर्द्ध्वं धूननेन वल्गमानं ( स्वस्थानात् प्रस्खलत् मुकुटं किरीटं यस्यः सः तथा—क्रोधाधिकात्ताननः=क्रोधेन कोपेन अधिकात्तमुत्फुल्लितनेत्रमाननं यस्य सः, तथा—स्थानाक्रमणवामनीकृततनुः=स्थानस्य पश्चावस्थितेः आक्रमणाय ( शत्रुं प्रति प्रहारार्थं परिवर्त्तनाय ) वामनीकृता खर्वीकृता तनुः शरीरं येन सः, तथा—प्रत्यग्रहस्तोच्छ्रयः=प्रत्यग्रः तात्कालिक एव हस्तस्य पाणेः उच्छ्रयः ऊर्ध्वीकरणं यस्य स तादृशः "अस्ति" इति शेषः । शार्दूलविक्रीडितम् ॥ १७ ॥

"एष" इति । "एष पाण्डवो दृश्यताम्" इति सम्बन्धः पाण्डवः=भीमसेनः; दृश्यताम्=आलोक्यताम् । कर्मणि लोट् । "सम्प्रहारे"ति—सम्प्रहारेण ( गदा ) शस्त्राघातेन यद् रुधिरं रक्तं तेन सिक्तानि प्लुतानि अङ्गानि यस्य सः तादृशः । रुधिराप्लुतं भीमं वर्णयति—"निर्भिन्ने"ति—निर्भिन्नं स्फुटितमग्रं पुरोभागो

भीमो भाति गदाभिघातरुधिरक्लिन्नावगाढव्रणः
शैलो मेरुरिवैष धातुसलिलासारोपदिग्धोपलः ॥१८॥

द्वितीयः—

भीमां गदां क्षिपति गर्जति वल्गमानः
शीघ्रं भुजं हरति तस्य कृतं भिनत्ति ।

---

यस्य तादृशं यल्ललाटं मस्तकं तस्माद् वान्तं उद्गीर्णं (प्रस्नुतं) रुधिरं यस्य स तादृशः, तथा—भग्नांसकूटद्वयः=अंसावेव कूट-मद्रेः शृङ्गमित्यंसकूटं, भग्नं त्रुटितमसकूटयोर्द्वय युगलं यस्य सः प्रस्फुटितस्कन्धद्वयशिरोभाग इत्यर्थः, तथा—सान्द्रैः=सद्यस्कैर्घनैः निर्गलितैः=स्रवद्भिः प्रहाररुधिरैः=शस्त्राघातजनितैः रक्तैः आर्द्रीकृतोरःस्थलः=आर्द्रीकृत क्लेदितमुरःस्थलं वक्षःस्थलं यस्य स तथाभूतः, तथा—गदाभिघातरुधिरेण=गदाताडनोत्थेन रक्तेन क्लिन्नाः आर्द्राः अवगाढा गभीरा व्रणाः अरूंषि यस्य स तथाविधः एष भीमः=मध्यमपाण्डवः धातुसलिलासार०=धातूनां गैरिकादीनां सलिलासारैः जलधाराप्रपातैः उपदिग्धा लिप्ता उपलाः पाषाणाः यस्य स तादृशः मेरुः शैलः=मेरुनामा पर्वत इव भाति=राजते ।

"कूटं पूर्द्वारयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः । निश्चलेऽयोघने राशौ" इति हेमचन्द्रः । पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । उपमा । शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तं प्राक् ॥ १८ ॥

"भीमाम्" इति । नरपतिः=दुर्योधनः भीमाम्=भयङ्करीं गदाम्=गदाख्यं शस्त्रं क्षिपति=भीमसेनस्योपरि पातयति, वल्गमानः=उच्छलन् सन् गर्जति=(सिंहवत्) नादं करोतीत्यर्थः । शीघ्रम्=क्षिप्रमेव भुजम्=स्वबाहुं हरति=वञ्चयति भीमसेनकृतादाघातात् दूरीकरोतीत्यर्थः । तस्य=भीमस्य कृतम्=प्रयत्नं भिनत्ति=नाशयति येन

चारीं गतिं प्रचरति प्रहरत्यभीक्ष्णं
संशिक्षितो नरपतिर्बलवांस्तु भीमः ॥ १६ ॥

तृतीयः—एष वृकोदरः ।

शिरसि गुरुनिखातस्रस्तरक्तार्द्रगात्रो
धरणिधरनिकाशः संयुगेष्वप्रमेयः ।
प्रविशति गिरिराजो मेदिनीं वज्रदग्धः
शिथिलविसृतधातुर्हेमकूटो यथाद्रिः ॥ २० ॥

एष गाढप्रहारशिथिलीकृताङ्गं निपतन्तं भीमसेनं दृष्ट्वा—

---

गदापातने भीमसेनः कृतार्थो न भवेदिति, चारीम्=उच्छलनाख्यां गतिम् प्रचरति=करोति, तथा अभीक्ष्णम्=पुनः पुनः प्रहरति=प्रहारं करोति (प्रकरणाद् भीमोपरि इति लभ्यते) एवं रूपेण—नरपतिः=राजा दुर्योधनः संशिक्षितः=प्राप्तशिक्षः गदायुद्धे बहु-निपुण इत्यर्थः, भीमः तु=परं भीमसेनस्तु बलवान्=दुर्योधनापेक्षया बलेऽधिकोऽस्तीति शेषः ।

उक्तञ्च श्रीकृष्णेन भगवता गदापर्वणि—
"उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तर" इति ॥
वसन्ततिलकावृत्तम् ॥ १६ ॥

"एष" इति । "एष वृकोदर" इत्यस्याग्रिमश्लोकस्थेन "प्रविशति" इति क्रियापदेनान्वयः ।

"शिरसि" इति । शिरसि=उत्तमाङ्गे गुरुनिखात०=गुरोर्महतो निखातात् गाढव्रणात् स्रस्तेन प्रवहता रक्तेन शोणितेन आर्द्राणि क्लिन्नानि गात्राणि यस्य सः, तथा—धरणिधरनिकाशः=पर्वततुल्यः, संयुगेषु=युद्धेषु अप्रमेयः=निरुपमः केनाप्यसह्य इत्यर्थः एवम्भूत एष वृकोदरो भीमः, शिथिलविसृतधातुः=शिथिलाः त्रुटितसन्धयो(ऽत एव) विसृताः भिन्नभिन्नाः धातवो गैरिकादयो यस्य स तथाविधः, वज्रदग्धः=वज्रेण अशनिना दग्धः प्लुष्टः

एकाग्राङ्गुलिधारितोन्नतमुखो व्यासः स्थितो विस्मितः।

द्वितीयः—

दैन्यं याति युधिष्ठिरोऽत्र विदुरो वाष्पाकुलाक्षः स्थितः।

तृतीयः—

स्पृष्टं गाण्डिवमर्जुनेन गगनं कृष्णः समुद्वीक्षते,

सर्वे—

शिष्यप्रीतितया हलं भ्रमयते रामो रणप्रेक्षकः ॥२१॥

---

हेमकूटः=सुवर्णशिखरः सुमेरुः अद्रिः=पर्वतो यथा ( सुमेरुपर्वत इव ) मेदिनीम्=पृथिवीम् प्रविशति=अतिव्यथाकारणाद् भूमौ पततीत्यर्थः। मालिनीवृत्तम् ॥ २० ॥

"एष" इति अग्रिमेन व्यास इत्यादिना सम्बन्धः।

"गाढे"ति। गाढेन तीव्रेण प्रहारेण दुर्योधनचालितायाः गदाया आघातेन शिथिलीकृतानि त्रुटितसन्धीनि अङ्गानि हस्तपादाद्यवयवा यस्य तम्, निपतन्तम्=भूमौ स्खलन्तम्। भीमसेनं दृष्ट्वा=विलोक्य।

"एकाग्राङ्गुली"ति। एका अग्राङ्गुलिर्धारिता यत्र तदेकाग्राङ्गुलिधारितं, तच्च ( तादृशं ) उन्नतं मुखं यस्य सः एवमाकारो व्यासः=द्वैपायनो मुनिः स्थितः=स्तब्धास्यो वर्त्तत इत्यर्थः।

अत्र=एवमवसरे युधिष्ठिरः=धर्मपुत्रो राजा दैन्यम्=दीनभावं याति=प्राप्नोति सम्प्रति किं भविष्यतीति कातरताङ्गत इति तिष्ठतीत्यर्थः। विदुरः वाष्पाकुलाक्षः=वाष्पैर्नेत्रवारिभिः आकुले विह्वले अक्षिणी नेत्रे यस्य स तथाभूतः स्थितः।

अर्जुनेन गाण्डिवम्=गाण्डीवनाम स्वीयं धनुः स्पृष्टम्=मनागुन्नमितमित्यर्थः। कृष्णः=कृष्णस्तु भगवान् देवकीनन्दनः गगनम्=आकाशं समुद्वीक्षते=आलोकते।

रणप्रेक्षकः=भीमदुर्योधनयो गंदायुद्धप्रेक्षी रामः=बलभद्रः

प्रथमः—एष महाराजः।

वीर्यालयो विविधरत्नविचित्रमौलि-
युक्तोऽभिमानविनयद्युतिसाहसैश्च।
वाक्यं वदत्युपहसन्नतु भीम ! दीनं
वीरो निहन्ति समरेषु भयं त्यजेति ॥ २२ ॥

द्वितीयः—एष इदानीमपहास्यमानं भीमसेनं दृष्ट्वा स्वमूरुमभिहत्य कामपि सञ्ज्ञां प्रयच्छति जनार्दनः।

तृतीयः—एष सञ्ज्ञया समाश्वासितो मारुतिः।

---

शिष्यप्रीतितया=शिष्यस्य (शिष्ये) दुर्योधनस्य (दुर्योधने) वा या प्रीतिः स्नेहः तस्या भावस्तत्ता तया, दुर्योधनविषयकस्नेहभावेनेत्यर्थः हलम्=स्वं सीरनामकमस्त्रं भ्रमयते=घूर्णयते। शार्दूलवि० ॥ २१ ॥

'वीर्यालय" इति। वीर्यालयः=महाबली विविध०=विविधैर्नानाप्रकारैः रत्नैर्मणिभिः विचित्रो मौलिर्मुकुट यस्य सः तादृशः, अभिमान०=अभिमानो गर्वः, विनयः सभ्यता, द्युतिः ओजः, साहसं बलम् एतेषां द्वन्द्वः एतैरभिमानादिभिः युक्तः=विशिष्टः उपहसन् सन् (एष महाराजः) इति=वक्ष्यमाणं वाक्यं वदति= वक्तुमर्हं वचः कथयतीत्यर्थः। किं तद् वाक्यं तदाह—हे ! भीम ! वीरः=कातरताशून्यः शूरोजनः समरेषु=युद्धेषु दीनम्=कष्टां दशां प्राप्तं प्रतिभटं नतु=नैव निहन्ति=मारयति व्यथयति (अतो हेतोः) त्वं भयम्=भीतिं त्यज=जहीहि मत्तो गदाप्रक्षेपशङ्कां विहाय, स्वश्वासं प्राप्य च पुनर्युद्धाय सन्नद्धो भवेत्यर्थः। वसन्ततिलकम् ॥ २२ ॥

"सञ्ज्ञये"ति। चेष्टयेत्यर्थः। समाश्वासितः=सन्तोषितः धैर्यमापादित इति यावत्। मारुतिः=भीमसेनः अस्य अग्रिमश्लोक-

संहृत्य भ्रुकुटी ललाटविवरे स्वेदं करेणा क्षिपन्
बाहुभ्यां प्रतिगृह्य भीमवदनश्चित्राङ्गदां स्वां गदाम् ।
पुत्रं दीनमुदीक्ष्य सर्वगतिना लब्ध्वेव दत्तं बलं
गर्जन् सिंहवृषेक्षणः क्षितितलाद् भूयः समुत्तिष्ठति ॥२३॥

प्रथमः——हन्त ! पुनः प्रवृत्तं गदायुद्धम् । अनेन हि—
भूमौ पाणितले निघृष्य तरसा बाहू प्रमृज्याधिकं

---

स्थेन क्रियापदेन सह सम्बन्धः । "एष मारुतिः भूयः क्षितितलात् समुत्तिष्ठति" इति योजनेत्यर्थः । तथा च व्याख्यायते ।

"संहृत्य" इति । भ्रुकुटी=भ्रकुटी संहृत्य=क्रोधवशात् सङ्कोच्य, ललाटविवरे=मस्तकगर्त्ते ( विद्यमानं ) स्वेदम्=घर्मवारि करेण=पाणिना आक्षिपन्=उत्सर्जयन् प्रोञ्छन्नित्यर्थः चित्राङ्गदाम्=चित्रं विचित्रं मण्यादिभिर्जटितत्वात् अङ्गदं भूषणविशेषो यस्याः सा तां स्वाम्=स्वीयां गदाम्= बाहुभ्याम्=भुजाभ्यां प्रतिगृह्य=आदाय, दीनम्=दुर्योधनगदाहत्या दैन्यं प्राप्तं श्रान्तमिति यावत् पुत्रम्=सुतम् उद्वीक्ष्य=दृष्ट्वा सर्वगतिना=वायुना दत्तम्=अर्पितं बलम्=सामर्थ्यं लब्ध्वा=आसाद्य इव गर्जन्=नादं कुर्वन् सिंहवृषेक्षणः=सिंहवृषस्य महासिंहस्य ईक्षणे ( नेत्रे ) इव ईक्षणे यस्य सः एवम्भूतः भीमवदनः=भयङ्करमुखः एष मारुतिः=पवनात्मजो भीमः भूयः=पुनरपि समुत्तिष्ठति=युद्धाय सन्नद्धो भवतीत्यर्थः । वृत्तमुक्तम् । एषु प्रायः "स्वभावोक्ति' रलङ्कारोऽपि ज्ञेयः । "लब्ध्वेव दत्तं बलम्" इत्यत्र तु "निमित्तोत्प्रेक्षा" "भ्रुकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्" इति, "श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागति" रितिचामरः ॥ २३ ॥

"हन्त" इति हर्षे विषादे वा ।

"अनेन" इत्यस्याग्रिमश्लोकस्थेन "पाण्डुतनयेन" इति पदेनान्वयः । "भूमा"विति । पाणितले=पाण्योः करयोः तले तालिके

सन्दष्टोष्ठपुटेन विक्रमबलात् क्रोधाधिकं गर्जता।
त्यक्त्वा धर्मघृणां विहाय समयं कृष्णस्य सञ्ज्ञासमं
गान्धारीतनयस्य पाण्डुतनयेनोर्वोर्विमुक्ता गदा ॥२४॥

सर्वे–हा! धिक्! पतितो महाराजः।

तृतीयः–एष रुधिरपतनद्योतिताङ्गं निपतन्तं कुरुराजं दृष्ट्वा खमुत्पतितो भगवान् द्वैपायनः (य एषः)

हेला संवृतलोचनेन हलिना नेत्रोपरोधः कृतो

भूमौ=पृथिव्यां निघृष्य=नितरां घर्षयित्वा, तरसा=वेगेन अधिकम्=बहु यथा स्यात्तथा बाहू=भुजे प्रमृज्य=मर्दयित्वा, धर्मघृणाम्=धर्मसम्बन्धिनीं घृणां दयां त्यक्त्वा=विहाय (अधार्मिकं दुर्योधनमधर्मेणैव हन्तुं धर्मयुद्धमर्यादां त्यक्त्वेत्यर्थः) अतएव समयम्=धर्मयुद्धसङ्केतं विहाय=परित्यज्य, कृष्णस्य=वासुदेवस्य सञ्ज्ञासमम्=चेष्टयाऽऽदेशसमकालमेव सन्दष्टोष्ठपुटेन=सन्दष्टश्चर्वित ओष्ठपुटो येन तेन यथा विक्रमबलात्=गदाचालनार्थं पदक्रमणसामर्थ्याद् हेतोः क्रोधाधिकम्=क्रोधेन कोपेनाधिकं यथा तथा (बहुक्रोधपूर्वकमित्यर्थः) गर्जता=सिंहनादं कुर्वता अनेन पाण्डुतनयेन=भीमसेनेन गान्धारीतनयस्य=गान्धार्याः पुत्रस्य दुर्योधनस्य ऊर्वोः="सक्थि"पदवाच्ययोः जानूपरिभागयोः, गदा विमुक्ता=प्रक्षिप्ता आहतेति यावत्। वृत्तमुक्तम् ॥ २४ ॥

"हा धिक्" इति महत्कष्टमित्यर्थः। महाराजः=दुर्योधनः।

'रुधिरे'ति—रुधिरस्य शोणितस्य पतनेन स्खलनेन द्योतितं प्रकटितं स्फुटितमिति यावत् अङ्गं सक्थिरूपं यस्य स तं, निपतन्तम्=भूमौ स्खलन्तम्, कुरुराजम्=दुर्योधनम्। खम्=आकाशम्, उत्पतितः=उड्डीनः स्वयोगशक्त्येति शेषार्थः।

"य एष" इति। अस्य पूर्वं 'द्वितीयः" इति पठितव्यं स्यात्। "हेले"ति—हेलया अवज्ञया (छलेन दुर्योधनस्य हननरूपया

दृष्ट्वा क्रोधनिमीलितं हलधरं दुर्योधनापेक्षया।
सम्भ्रान्तैः करपञ्जरान्तरगतो द्वैपायनज्ञापितो
भीमः कृष्णकरावलम्बितगतिर्निर्वाह्यते पाण्डवैः ॥२५

प्रथमः—अयमप्यमर्षोन्मीलित (रभसं ?) लोचनो भीमसेनापक्रमणमुद्वीक्षमाण इत एवाभिवर्त्तते भगवान् हलायुधः। य एषः,

प्रचलललितमौलिः क्रोधताम्रायताक्षो
भ्रमरमुखविदष्टां किञ्चिदुत्कृष्य मालाम्।

हेतुभूतया) हलिना=बलदेवेन नेत्रोपरोधःकृतः=नेत्रद्वन्द्वनिमीलनं विहितम्, क्रोधावस्थानाटनमिदम्। दुर्योधनापेक्षया=स्वशिष्यस्य दुर्योधनस्य पक्षपातानुरोधेन क्रोधनिमीलितम्=क्रोधेन कोपेन निमीलितं सङ्कुचितगात्रं क्रोधव्याप्तमित्यर्थः हलधरम्=बलभद्रं दृष्ट्वा=विलोक्य सम्भ्रान्तैः=सम्भ्रमं प्राप्तैस्त्रस्तैरिति यावत् पाण्डवैः द्वैपायनज्ञापितः=व्यासेन कृतानुशयः, करपञ्जरान्तरगतः=करपञ्जरस्य मध्येकृतः कृष्णकरा०=कृष्णस्य कराभ्यामवलम्बिता दत्ताश्रया गतिरवस्था यस्य सः तादृशः भीमः निर्वाह्यते=ध्रियते क्रुद्धाद् बलभद्रादनिष्टशङ्कया रक्ष्यत इत्यर्थः।

अथवा—कृष्णस्य ककरःपाणिः, तस्यावलम्बितमवलम्बनमेव गतिराश्रयो यस्य स इति व्याख्येयम् "हेला स्त्रियामवज्ञायां विलासे वारयोषिताम्" इति कोषान्तरम्। वृत्तमुक्तम् ॥ २५ ॥

"अयमपी"ति—"अयमपि हलायुधो भगवान् इत एवाभिवर्त्तते" इति। कीदृशः—"अमर्षे"ति अमर्षेण क्रोधेन उन्मीलिते ऊर्ध्वं मीलिते लोचने नेत्रे येन सः, तथा—भीमसेनस्य अपक्रमणं निर्गमनम्, उद्वीक्षमाणः=प्रतिपालयन् कदासौ कृष्णकरपञ्जरान्निर्गच्छेत् अहञ्च तं घातयेयमिति प्रतीक्षां कुर्वाण इत्यर्थः।

"य एष" इति। अस्य अग्रिमश्लोकेन सम्बन्धः। "प्रचल-

असिततनुविलम्बिस्रस्तवस्त्रानुकर्षी
क्षितितलमवतीर्णः पारिवेषीव चन्द्रः ॥ २६ ॥

द्वितीयः—तदागम्यतां वयमपि तावन्महाराजस्य प्रत्यनन्तरीभवामः ।

उभौ—बाढम् । प्रथमः कल्पः ।

( निष्क्रान्ताः ) विष्कम्भकः ।

---

ललितमौलिः" इति । प्रचलश्चञ्चलो ललितः सुन्दरो मौलिः उत्तमाङ्गं मुकुटं वा यस्य सः, तथा—क्रोध०=क्रोधेन ताम्रे रक्ते आयते विस्फारिते अक्षिणी नयने यस्य सः, तथा—भ्रमरमुखविदष्टाम्=भ्रमराणां षट्पदानां मुखै रास्यैर्विदष्टां पीतरसां मालाम्= वैजयन्तीमालां किञ्चित् उत्कृष्य=मनाक् कर्षयित्वा असित०= असितं नीलं तनुविलम्बि शरीरे लम्बमानं स्रस्तं स्खलितं यद् वस्त्रं वासः तस्यानुकर्षी आकुञ्चनकारी, पारिवेषी=परिवेषःपरिधि रेव पारिवेषः सोऽस्यास्तीति पारिवेषी मण्डलसहितः क्षितितलं= पृथिवीतलम् अवतीर्णः=प्राप्तः चन्द्रः=शशी इवेत्युत्प्रेक्षा, "अस्ति" इति शेषः ॥ मालिनी ॥ २६ ॥

प्रत्यनन्तरीभवामः=अव्यवहिता भवामः । महाराजदुर्योधनस्य समीपं गच्छाम इत्यर्थः ।

"विष्कम्भक" इति । अस्य लक्षणन्तु साहित्यदर्पणे यथा—
वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य योजितः ॥ इति ।

विष्कम्भ एव "विष्कम्भकः" । अयन्तु मध्यमपात्रप्रयुक्तः संस्कृतात्मकत्वात् शुद्धो विष्कम्भकः । अन्यो मध्यमनीचपात्रप्रयुक्तः संस्कृतप्राकृतभाषामयः सङ्कीर्णोऽपि भवतीति ध्येयमिति दिक् ।

( ततः प्रविशति बलदेवः )

बलदेवः—भो भोः पार्थिवा ! न युक्तमिदम् ।

मम रिपुबलकालं लाङ्गलं लङ्घयित्वा
रणगतमतिसन्धिं माञ्च नावेक्ष्य दर्पात् ।
रणशिरसि गदां तां तेन दुर्योधनोर्वोः
कुलविनयसमृद्ध्या पातितः पातयित्वा ॥ २७ ॥

भो दुर्योधन ! मुहूर्त्तं तावदात्मा धार्यताम् ।

सौभोच्छिष्टमुखं महासुरपुरप्राकारकूटाङ्कुशं
कालिन्दीजलदेशिकं रिपुबलप्राणोपहारार्चितम् ।

---

बलदेवप्रवेशं सूचयति-"तत" इति । 'भो भो'रिति स्पष्टार्थम् ।

"मम" इति—"रिपुबलकालं"=रिपूणां शत्रूणां बलस्य शक्तेः कालं क्षयकरं मम लाङ्गलम्=( मदीयं ) हलं लङ्घयित्वा=अविगणय्य, दर्पात्=अहङ्कारात् रणगतम्=रणे स्थितम्, अतिसन्धिम्=अति अधिकः सन्धिर्यस्य सः तम्, कुरुपाण्डवपक्षद्वयेऽपि तटस्थरूपेण वर्त्तमानं, माञ्च न अवेक्ष्य=नैव आलोच्य अर्थान्ममोपेक्षां कृत्वा, तेन=भीमेन रणशिरसि=सङ्ग्राममध्ये ताम्=प्रसिद्धां स्वीयां गदाम्=दुर्योधनोर्वोः=दुर्योधनस्य सक्थ्नोः पातयित्वा=क्षेपयित्वा, कुलविनयसमृद्ध्या=कुलस्य अर्थात्कुरुवंशस्यैव या विनयरूपा समृद्धिरैश्वर्यं तया सहैव पातितः=दुर्योधनो हत इत्यर्थः ।

न केवलमधर्मेण दुर्योधनस्य हननं कृतम्, अपितु स्ववंशस्य विनयसम्पत्तिरपि भीमेन नाशितेति भावः । मालिनीवृत्तम् । लक्षणमुक्तं प्राक् ॥ २७ ॥

"भो" इति । मुहूर्त्तम्=किञ्चित्कालमित्यर्थः । तावत् आत्मा=शरीरं हृदयं वा धार्यताम्=अवलम्बताम् । साहसं मा हार्षीरित्यर्थः ।

"सौभोच्छिष्टमुखम्" इति । "अद्य (अहं) यावत् भीमस्य उरसि=वक्षःस्थले हलं=सीरं, उत्क्षिप्य=उत्पात्य, केदारमार्गकुलम्=केदारमार्गे

हन्तोत्क्षि(प्त)प्य हलं करोमि रुधिरस्वेदार्द्रपाकोत्तरं(रे)
भीमस्योरसि यावदद्यविपुलं केदारमार्गाकुलम् ॥२८॥

( नेपथ्ये )

प्रसीदतु प्रसीदतु भगवान् हलायुधः ।

---

क्षेत्रवर्त्मनि आकुलं व्यापारव्यग्रं करोमि=विदधामि "भो! दुर्योधन! तावत् त्वया आत्मा धार्यताम्" इति सम्बन्धः। कीदृशं हलम्—सौभोच्छिष्टमुखम्=सौभस्य तुष्टान्महादेवात् शाल्वेन गृहीतस्य अयस्मयस्य यानस्य उच्छिष्टं स्पृष्टं मुखं येन सौभविध्वंसकमित्यर्थः, तथा—महासुरपुरप्राकारकूटाङ्कुशम्=महासुरः शाल्वः तस्य पुरस्य यत् प्राकारकूटं वप्रश्रृङ्खला, तस्य अङ्कुशमङ्कुशवच्छेदकमित्यर्थः, ( पुरा रामेण शाल्ववृष्णियुद्धे ससौभः शाल्वो हलेन हत इति भागवतादिपुराणेषु प्रसिद्धा कथा )··· ··· ··· ··· ···
तथा—कालिन्दीजलदेशिकम्=कालिन्द्याः यमुनाया जलस्य शिक्षकमाकर्षम्, ( गोकुलमागतो रामो गोपी रमयन् यमुनां चकर्षेति पौराणिकी कथाऽत्रानुसन्धेया ) रिपुबलप्राणोपहारोचितम्=रिपूणां शत्रूणां बलं सैन्यं, तस्य प्राणा असव एव उपहारो बलिः, तेनार्चितं पूजित सकलशत्रुसैन्यक्षयकरमित्यर्थः, तथा-विपुलम्=महत्, अथवा क्रियाविशेषणमिदम्—विपुलं विस्तृतं यथा स्यात्तथा करोमि क्षिपामीत्यर्थः। कथम्भूते भीमस्य उरसि—रुधिरस्वेदार्द्र(पङ्को)पाकोत्तरे=रुधिरमेव स्वेदः स एवार्द्रपङ्कः सद्यस्कः कर्दमः तेन उत्तरे तद्व्याप्ते इत्यर्थः × × × "उत्तर"मिति पाठे तु "हलम्" इत्यस्य विशेषण बोध्यम्। अर्थे नास्ति बहु विशेषः। "पाक" पाठापेक्षया "पङ्क" पाठं साधु मन्ये। अग्रे पण्डिताः प्रमाणम्। शार्दूलविक्रीडितम् ॥ २८ ॥

"नेपथ्ये" इति। अस्य लक्षणमुक्तं प्राक्।

"प्रसीदतु" इति। क्रोधं संहरत्वित्यर्थः। भगवान्=ईश्वरः।

बलदेवः—एवङ्गतोऽपि—अनुगच्छति मां तपस्वी दुर्योधनः। एषः,

श्रीमान् संयुगचन्दनेन रुधिरेणार्द्रानुलिप्तच्छवि-
र्भूसंसर्पणरेणुपाटलभुजो बालव्रतं ग्राहितः।
निर्वृत्तेऽमृतमन्थने क्षितिधरान्मुक्तः सुरैः सासुरै-
राकर्षन्निव भोगमर्णवजले श्रान्तोज्झितो वासुकिः॥२६॥

---

"एवङ्गतोऽपि" इति। एतादृशीमूरुभङ्गरूपामवस्थां प्राप्तोऽपीत्यर्थः। एतेन दुर्योधनस्य महानुत्साहः सूचितः। अनुगच्छति=अनुसरति। मां सत् कर्त्तुमिति शेषः।

"एष" इत्यस्य अग्रिमश्लोकेनान्वयः। "एष दुर्योधनो वासुकिरिव" अस्तीति शेषः। तथाहि—श्रीमान्=शौर्यरूपया श्रियोपेतः, संयुगचन्दनेन=संयुगे(स्य)युद्धे(स्य)चन्दनेन मलयजरसेन रुधिरेण=रक्तेन आर्द्रानुलिप्तच्छविः=आर्द्रा प्रत्यग्राऽनुलिप्ता लेप प्राप्ता छविः कान्तिर्यस्य सः, अथवा—आर्द्रेण प्रत्यग्रेणानुलिप्तेन लेपेन छविः शोभा यस्य स तथाभूतः। सङ्ग्रामे चन्दनस्थानीयेन रुधिरेण लिप्तलिप्ताङ्ग इत्यर्थः। तथा—भूसंसर्पण०=भुवि पृथिव्यां संसर्पणेन रिङ्खणेन यो रेणुर्धूलिः तेन पाटलौ धूसरौ भुजौ यस्य सः, एवम्भूतो बालव्रतम्=बालचेष्टां ग्राहितः=गमित इवेति लुप्तोत्प्रेक्षा (बालवद्भुवि रिङ्खणेन धूलिधूसरितसर्वगात्र इत्यर्थः) एवंविशेषणविशिष्ट एष दुर्योधनः अमृतमन्थने=अमृतस्य सुधाया मन्थने विलोडने निर्वृत्ते=समाप्ते सति अर्थात् मन्दराचलेन क्षीरसमुद्रस्य मन्थनादमृतप्राप्तौ सत्यां साऽसुरैः=असुरैर्दैत्यैः सह वर्त्तमानैः सदैत्यैः सुरैः=देवैः क्षितिधरात्=मन्दराख्यात् पर्वतात् मुक्तः=परित्यक्तः तथा—अर्णवजले=समुद्रपानीये भोगम्=स्वकायम् आकर्षन्=आलिखन्, श्रान्तोज्झितः=श्रान्तः स्थगितश्वासो उज्झितः वासुकिः=तदाख्यो नाग इव "अस्ति" इति शेषः। अत्र पूर्णोपमालङ्कारः।

( ततः प्रविशति भग्नोरुयुगलो दुर्योधनः )

दुर्योधनः—एष भोः !

भीमेन भित्त्वा समयव्यवस्थां
गदानिपातक्षतजर्जरोरुः ।
भूमौ भुजाभ्यां परि (कर्ष१कृष्य)माणं
स्वं देहमर्धोपरतं वहामि ॥ ३० ॥

प्रसीदतु प्रसीदतु भगवान् हलायुधः ।

त्वत्पादयोर्निपतितं पतितस्य भूमा
वेतच्छिरः प्रथममद्य विमुञ्च रोषम् ।

"भोगः=सुखे धने पुंसि ( चाहेः ) शरीरफणयोर्मतः ।
पालनेऽभ्यवहारे च योषिदादिभृतावपि" इति मेदिनी ।
वृत्तं शार्दूलविक्रीडितम् ॥ २६ ॥

"भग्नोरुयुगल" इति । भग्नं त्रुटितमूरुयुगलं सक्थिद्वयं यस्य सः । "एष भोः" इति । "एष" इत्यस्याग्रे सम्बन्धः "एषोऽहं स्वं देहं वहामि" इति । "भीमेन" इति । भीमेन=भीमसेनेन समयव्यवस्थाम्=समयस्य सङ्केतस्य व्यवस्थां मर्यादां भित्त्वा=त्रोटयित्वा विहायेत्यर्थः गदानिपात०=गदाया निपातेन प्रक्षेपेण यत् क्षतं तेन जर्जरौ चूर्णितौ ऊरू सक्थिनी यस्य स तादृशः एषोऽहं भूमौ=पृथिव्यां भुजाभ्याम्=बाहुभ्यां परिकृष्यमाणम्=आघृष्यमाणं, तथा-अर्धोपरतम्=अर्ध(भागे) मृतं स्वं=स्वीयं देहम्=शरीरं वहामि=धारयामि. देशाद्देशान्तरं प्रति प्रापयामीत्यर्थः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥ ३० ॥

"प्रसीदतु" इत्यादि पूर्वं व्याख्यातम् ।

'त्वत्पादयो"रिति । भूमौ=भूतले प्रथमं पतितस्य=पूर्वं भीमगदाघातेनाधःसंयुक्तस्य ममेति शेषः एतत् शिरः=इदमुत्तमाङ्गं त्वत्पादयोः निपतितम्=धृतमित्यर्थः, त्वम् अद्य रोषं=क्रोधं विमुञ्च=जहीहि,

जीवन्तु ते कुरुकुलस्य निवापमेघा
वैरञ्च विग्रहकथा च वयञ्च नष्टाः ॥ ३१ ॥

बलदेवः—भो दुर्योधन! मुहूर्त्तं तावदात्मा धार्यताम्।

दुर्योधनः—किं भवान् करिष्यति।

बलदेवः—श्रूयताम्।

आक्षिप्तलाङ्गलमुखोल्लिखितैः शरीरै-
निर्दारितांसहृदयान्मुसलप्रहारैः।
दास्यामि संयुगहतान् सरथाश्वनागान्
स्वर्गानुयात्रपुरुषांस्तव पाण्डुपुत्रान् ॥ ३२ ॥

---

त्यजेति यावत्, कुरुकुलस्य=कुरोर्वंशस्य निवापमेघाः=मृतेभ्यो दीयमानं तर्पणजलं "निवाप" इत्युच्यते निवापस्य तर्पणाञ्जलिदानस्य मेघाः मेघसदृशाः ते=पाण्डवाः जीवन्तु=प्राणान् धारयन्तु अन्यथा त्वया हतेषु तेषु पश्चात् कश्चिदपि निवापाञ्जलिदानाय न स्थास्यतीति महती धर्महानिः स्यात् कुरुवंशोच्छेदश्च।

कुत एवमिति चेदाह—"वैरम्" इति यतः सम्प्रति—वैरम्=शत्रुभावः, विग्रहकथा=सङ्ग्रामवार्त्ता वयञ्च नष्टाः=मृताः जीवतामेव शात्रवं भवति मरणोत्तरन्तु वैरमपि म्रियते एव (न करणीयम्" इति भावः। अत्र "नष्टा" इत्यस्य लिङ्गादिव्यत्ययेनान्वयो बोध्यः ३१

"भो दुर्योधन" इत्यादि स्पष्टम्।

"आक्षिप्ते"ति। आक्षिप्तस्य (हन्तुं) सञ्चालितस्य लाङ्गलस्य=हलस्य मुखेन अग्रभागेन उल्लिखितैः कृष्टैर्विद्धैरिति यावत् एवम्भूतैः शरीरैः=देहैः उपलक्षितान्, तथा—मुसलप्रहारैः=अयोग्राघातैः निर्दारितांसहृदयान्=निर्दारित पाटितमंसहृदयं स्कन्धो हृदयञ्च येषां तान्, तथा—सरथाश्वनागान्=रथाश्वनागैः सहितान् संयुगहतान्=संयुगे युद्धे हतान् मृतान् पाण्डुपुत्रान्=पाण्डोस्तनयान् युधिष्ठिरादीन् तव=तुभ्यं दास्यामि=अर्पयिष्यामि पुनः की-

दुर्योधनः—मा मा भवानेवम्।

प्रतिज्ञावसिते भीमे गते भ्रातृशते दिवम्।
मयि चैवं गते राम! विग्रहः किं करिष्यति॥ ३३॥

बलदेवः—प्रत्यक्षं वञ्चितो भवानित्युत्पन्नो मे रोषः।

दुर्योधनः—वञ्चित इति मां भवान् मन्यते।

बलदेवः—कः संशयः।

दुर्योधनः—हन्त भोः! दत्तमूल्या इव मे प्राणाः। कुतः,

---

दृशान्—स्वर्गानुयात्रपुरुषान्=स्वर्गमनुयात्रा येषां ते स्वर्गानुयात्राः तादृशः पुरुषाः साहाय्यकारिणः सैनिकाद्या येषां तान्।

पाण्डुसुतान् तत्सहायताकारिणोऽन्यान् पुरुषांश्च घातयिष्यामीति निर्गलितार्थः। यद्दुर्योधनेन पृष्टं किं करिष्यति भवान्, तदुत्तरे सपार्ष्णिग्राहं पाण्डुसुतान् हनिष्यामीति बलदेवस्योत्तरम्। "अयोग्रो मुसलोऽस्त्री स्याद्" इत्यमरः। वसन्ततिलकावृत्तम्॥ ३२॥

"प्रतिज्ञे"ति। हे! राम! भीमे=भीमसेने प्रतिज्ञावसिते=पूर्णप्रतिज्ञे भ्रातृशते=भ्रातॄणां दुःशासनप्रभृतीनां शते दिवं=स्वर्गं गते=याते, मयि च=दुर्योधने एवङ्गते=भग्नोरौ सति (सम्प्रति) विग्रहः=सङ्ग्रामः किं करिष्यति=किं फलिष्यतीत्यर्थः। इदानीं सङ्ग्रामकथा वृथैवेति भावः॥ ३३॥

"प्रत्यक्ष" मिति। सर्वेषां समक्ष इत्यर्थः।

वञ्चितः=ऊरौ गदापातनचेष्टया प्रतारितः। इति हेतोः मे=मम रोषः=क्रोध उत्पन्नः=जातः।

दुर्योधनवाक्यं "हन्त" इति। महान् हर्ष इत्यर्थः। एवं सति मे प्राणाः=असवः दत्तमूल्याः इव=दत्तं मूल्यं फलं यैस्ते तादृशाः सफला इवेत्यर्थः।

वञ्चनया हनने भीमस्यैव कातर्यं न ममेति भावः।

आदीप्तानलदारुणाज्जतुगृहाद् बुद्ध्यात्मनिर्वाहिणा
युद्धे वैश्रवणालयेऽचलशिलावेग(प्रतीसालिना)प्रतीसारिणा
भीमेनाद्य हिडम्बराक्षसपतिप्राणप्रतिग्राहिणा
यद्यवं समवैषि मां छलजितं भो राम ! नाहं जितः ॥३४॥

बलदेवः—भीमसेन इदानीं तव युद्धवञ्चनामुत्पाद्य स्थास्यति ।

दुर्योधनः—किञ्चाहं भीमसेनेन वञ्चितः ।

बलदेवः—अथ केन भवानेवंविधः कृतः ।

[राजा] दुर्योधनः—श्रूयताम् ।

---

"आदीप्तानले"ति । आदीप्तः समन्ततो जाज्वल्यमानो योऽनलो वह्निः तेन दारुणात् भयङ्करात् जतुगृहात्=लाक्षागृहात्, ( मयैव पाण्डवानां दाहार्थं निर्मितात् ) बुद्ध्या=स्वमत्यैव आत्मनिर्वाहिणा=आत्मरक्षकेण ( आत्मना सहैव युधिष्ठिरादीनां त्रात्रेत्यर्थः ) वैश्रवणालये=कुबेरालये यक्षलोके अचलशिलावेग०=अचलानां पर्वतानां याः शिलाः, तासां वेगेन जवेन प्रतीसारिणा वर्षुकेण, तथा—हिडम्बराक्षसपति०=हिडम्बाख्यस्य राक्षसपतेः प्राणप्रतिग्राहिणा जीवनदात्रा एताद्दशेनात्यन्तं बलशालिनापि भीमेन यदि अद्य मां छलजितम्=कपटेन परास्तं समवैषि=त्वं जानासि तदा भो राम !=अहं न=नैव जितः=पराजितः ।

महाबली सन्नपि यदि शत्रुं कपटेन जयति तदा का तस्य शूरतेति भावः ॥ ३४ ॥

'भीमसेन" इत्यादिबलदेवोक्तेरयमाशयः । युद्धे त्वां वञ्चयित्वापि किमसौ स्थास्यति=जीविष्यति, नाहमिदं सहे, अतो हनिष्याम्येवैनमिति । अन्यत्सुगमम् ।

दुर्योधनः श्रीकृष्णस्यैव लीलामहात्म्यं वर्णयन्नाह—

येनेन्द्रस्य स पारिजातकतरुर्मानेन तुल्यं हृतो
दिव्यं वर्षसहस्रमर्णवजले सुप्तश्च यो लीलया।
तीव्रां भीमगदां प्रविश्य सहसा निर्व्याजयुद्धप्रिय-
स्तेनाहं जगतः प्रियेण हरिणा मृत्योः प्रतिग्राहितः॥३५

( नेपथ्ये )

[क] उस्सरह अय्या! उस्सरह।

बलदेवः-(विलोक्य) अये! अयमत्रभवान् धृतराष्ट्रो गान्धार्या दुर्जयेनादेशितमार्गोऽन्तःपुरानुबन्धः शोकाभिभूतहृदय इत एवाभिवर्त्तते। य एषः,

(क) उत्सरतार्याः! उत्सरत।

"येनेन्द्रस्ये"ति। येन=भगवता सः=प्रसिद्धः इन्द्रस्य=सुरपतेः पारिजातकतरुः=कल्पवृक्षः मानेन=इन्द्रत्वाभिमानेन तुल्यम्=सहैव यथा तथा हृतः=बलादाच्छिन्नः यश्च दिव्यं वर्षसहस्रम्=देवानां वर्षसहस्रपरिमितकालपर्यन्तं कल्पपर्यन्तमित्यर्थः, अर्णवजले=समुद्रजले (क्षीराब्धौ) लीलया=स्वक्रीडयैव सुप्तः=योगनिद्रां भजमान आसीत्, यश्च-भीमस्य=भीमसेनस्य तीव्राम्=तीक्ष्णां गदाम् प्रविश्य=व्याप्य निर्व्याजयुद्धप्रियः=छद्मसङ्ग्रामप्रीतिमान् "अस्ति" इति शेषः, तेन=वेदलोकप्रसिद्धेन जगतःप्रियेण=जगद्धितकरेण लोकानां कल्याणार्थमेव धृतावतारेण हरिणा=पापपुञ्जविध्वंसकेन श्रीकृष्णेन भगवता (एव) अहं मृत्योः प्रतिग्राहितः=मृत्युहस्ते दत्तः, अन्यथा भीमस्य कुतः सामर्थ्यमासीदिति दुर्योधनस्योत्साहो व्यज्यते। शार्दूल० ॥ ३५ ॥

उत्सरत=आगच्छतेत्यर्थः।

अत्रभवान्=पूज्य इत्यर्थः। आदेशितमार्गः=प्रदर्शितवर्त्मा, अन्तःपुरानुबन्धः=अन्तःपुरसहितः। शोकाभिभूतहृदयः=शोकेन पुत्र-

वीर्याकरः सुतशतप्रविभक्तचक्षु-
दर्पोद्य(द्ध)तः कनकयूपविलम्बबाहुः ।
सृष्टो ध्रुवं त्रिदिवरक्षणजातशङ्कै-
र्देवै ररातितिमिराञ्जलिताडिताक्षः ॥ ३६ ॥

( ततः प्रविशति धृतराष्ट्रो गान्धारी देव्यौ दुर्जयश्च )

धृतराष्ट्रः—पुत्र क्वासि ।

गान्धारी—(क) पुत्तअ ! कहिंसि ।

देव्यौ—(ख) महाराअ ! कहिं सि ।

धृतराष्ट्रः—भोः ! कष्टम् ।

वञ्चनानिहितं श्रुत्वा सुतमद्याहवे मम ।

(क) पुत्रक ! क्वासि ।

(ख) महाराज ! कुत्रासि ।

दाहेन अभिभूतं व्याकुलं हृदयं यस्य सः । "य एष" इति । अस्य अग्रिमश्लोकेनान्वयः ।

"वीर्याकर" इति । वीर्यस्य बलस्य आकरः खनिः महासत्त्व इत्यर्थः, सुतशत०=सुतानां शतं सुतशतं तत्र प्रविभक्तं लग्नं चक्षुर्दृष्टिर्यस्य सः शतसङ्ख्याकपुत्रशोकातुर इति फलितार्थः, दर्पोद्य(द्ध)तः=दर्पेऽहङ्कारे उद्यतः साहङ्कारः, अथवा—दर्पेण मृतपुत्रानृण्यार्थं दर्पेण उद्धतः सङ्ग्रामसन्नद्ध ( इव ) तथा—कनकयूप०=कनकयूपवत् सुवर्णस्तम्भवत् विलम्बौ दीर्घौ बाहू यस्य सः, त्रिदिवरक्षण०=त्रिदिवस्य स्वर्गस्य रक्षणाय जाता उत्पन्ना शङ्का येषां तैः देवैः=इन्द्रादिभिः सुरैः अरातितिमिरा०=अरातयः एव तिमिराञ्जलिः तेन ताडिते=हते अक्षिणी नेत्रे यस्य स तादृशः सृष्टः=रचितः कृत इति ध्रुवं नामोत्प्रेक्षे । वसन्तति० ३६॥

"वञ्चने"ति—अद्य आहवे=युद्धे वञ्चनया छलेन निहतं मारितं

मुखमन्तर्गतास्राक्षमन्धमन्धतरं कृतम् ॥ ३७ ॥

गान्धारि ! किं धरसे।

गान्धारी-[ग] जीवाविद ह्मि मन्दभाआ।

देव्यौ—[घ] महाराअ ! महाराअ !

राजा—भोः। कष्टम्। यन्ममापि स्त्रियो रुदन्ति।

पूर्वं न जानामि गदाभिघात-

रुजामिदानीं तु समर्थयामि।

यन्मे प्रकाशीकृतमूर्धजानि

रणं प्रविष्टान्यवरोधनानि ॥ ३८ ॥

धृतराष्ट्रः–गान्धारि ! किं दृश्यते दुर्योधननामधेयः कुलमानी।

गान्धारी–[क] महाराअ ! ण दिस्सदि।

---

(ग) जीवितास्मि मन्दभागा।

(घ) महाराज ! महाराज !

(क) महाराज ! न दृश्यते।

---

मम सुतं=पुत्रं श्रुत्वा=आकर्ण्य अन्धं मुखम्=अन्धं नेत्रहीनमपि मदीयमाननम्, अन्तर्गतास्रम्=अन्तर्गते अन्तर्लीने अस्रसहिते अक्षिणी यस्य तत्तादृशं सत् अन्धतरं कृतम्=अत्यन्तमन्धं सम्पादितं, पुत्रशोकस्यासह्यत्वादिति भावः ॥ ३७ ॥ स्पष्टमन्यत्।

"पूर्वम्" इति अहं पूर्वम्=रणभूमौ बन्धूनामागमनात् प्राक् गदाभिघातरुजाम्=गदाभिघा(तेन)स्य गदाताड(नेन)नस्य रुजां पीडां न जानामि=नैवाज्ञासिषमित्यर्थः, इदानीम्=अधुना तु=निश्चयेन समर्थयामि=तां पीडामनुभवामि, यत्=यस्माद्धेतोः प्रकाशीकृतमूर्धजानि=प्रकाशीकृतानि निर्वेणीकृतानि मूर्धजानि शिरोवालाः यैस्तानि मे=मम अवरोधनानि=अन्तःपुराणि ( अन्तःपुरस्त्रियः ) रणं प्रविष्टानि=सङ्ग्रामभूमिमागतानि।

धृतराष्ट्रः—कथं न दृश्यते । अद्यास्मि, योऽहमन्येष्टव्ये काले पुत्रं न पश्यामि । कृतान्तहतक !

रिपुसमरविमर्दं मानवीर्यप्रदीप्तं
सुतशतमतिधीरं वीरमुत्पाद्य मा(नं)नी ।
धरणितलविकीर्णं किं स योग्यो न भोक्तुं
सकृदपि धृतराष्ट्रः पुत्रदत्तं निवापम् ॥ ३९ ॥

गान्धारी—(ख) जाद ! सुयोधण देहि मे पडिवअणं । पुत्तसदविणासदुःक्खिदं महाराअं च मन्दभाअं ।

---

(ख) जात ! सुयोधन ! देहि मे प्रतिवचनम् । पुत्रशतविनाशदुःखितं महाराजञ्च मन्दभागम् । अत्र—"सम्भावेहि" इति शेषः । "सम्भावय" इत्यर्थः ।

---

यानि ममावरोधनानि सूर्योऽपि द्रष्टुं नाशकत्, तानीदानीं रणे रुदन्तीति महान्मे शोक इति भावः । अत्र करुणो रसो-वीरस्य पोषकृत् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥ ३८ ॥ स्पष्टमन्यत् ॥

"कृतान्ते' ति । ( हे ) कृतान्तहतक !=नीचमृत्यो ! । अस्याग्रेऽभिसम्बन्धः । "रिपुसमरे"ति—रिपुसमरविमर्दं=रिपूणां शत्रूणां समरस्य सङ्ग्रामस्य विमर्दं विध्वंसकं सङ्ग्रामेषु शत्रूणां जेतृ इत्यर्थः, तथा—मानवीर्यप्रदीप्तम्=मानश्चित्तसमुन्नतिः, वीर्यं शारीरं बलं ताभ्यां प्रदीप्तं जाज्वल्यमानं बहुमानि बहुबलि चेत्यर्थः, तथा—अतिधीरम्=सत्त्वशालि, तथा—वीरम्=युद्धे निर्भयं सुतशतं=पुत्रशतम्, उत्पाद्य=जनयित्वा सः मानी=अजेयो धृतराष्ट्रः=( अर्थात् अहमेव ) धरणितलविकीर्णम्=धरणितले पृथिवीतले विकीर्णं त्यक्तम्, पुत्रदत्तम्=शतसङ्ख्यैः पुत्रैर्दत्तं निवापम्=तर्पणवारि श्राद्धीयान्नादिकञ्च सकृदपि=एकवारमपि भोक्तुम्=पातुं न योग्यः=नैवार्हः किम् ?

बलदेवः-अये ! इयमत्रभवती गान्धारी ।

या पुत्रपौत्रवदनेष्वकुतूहलाक्षी
दुर्योधनास्तमितशोकनिपीतधैर्या ।
अस्रैरजस्रमधुना पतिधर्मचिह्न-
मार्द्रीकृतं नयनबन्धमिदं दधाति ॥ ४० ॥

धृतराष्ट्रः-पुत्र ! दुर्योधन ! अष्टादशाक्षौहिणीमहाराज ! क्वासि !

राजा—अद्यास्मि महाराजः ।

धृतराष्ट्रः—पुत्रशतज्येष्ठ ! देहि मे दर्शनम् ।

---

एतादृशोऽहं दुर्भाग्यो यस्य कृतान्तहतकेन एकोऽपि पुत्रो नावशेषितो यो धृतराष्ट्रस्यौर्ध्वदैहिकीं क्रियां कुर्यादिति भावः । ‘पितृदानं निवापः स्याद्’’ इत्यमरः । मालिनीवृत्तम् ॥ ३९ ॥

अत्रभवती=पूज्या । "या" इति । धृतराष्ट्रपत्नी सुयोधनमाता पुत्रपौत्रवदनेषु=पुत्रपौत्राणां वदनेषु मुखेषु अकुतूहलाक्षी=न कुतूहलं दर्शनार्हमाश्चर्यं ययोस्ते “अकुतूहले” ते च ते अक्षिणी नयने यस्याः सा पतिधर्मपरायणा गान्धारी पत्यावन्धे सति स्वनेत्रयोः पिधानमकरोदिति पौराणिकी कथा ।

दुर्योधना०=दुर्योधनस्यास्तमितेन अस्तमयेन पराजयेन ( आसन्न मृत्युना वा ) यः शोको मन्युः, तेन निपीतं विनष्टं धैर्यं धीरता यस्याः सा तादृशी, गान्धारी अधुना=इदानीम् अजस्रम्=निरन्तरम्, पतिधर्मचिह्नम्=पतिधर्मस्य पातिव्रत्यस्य चिह्नं लक्षणम् अस्रैः=नेत्रवारिभिः आर्द्रीकृतम्=क्लेदितम् इदं नयनबन्धनम्=नयनयोर्नेत्रयोः पट्टिकां दधाति=धारयति, “अये (सा) इयमत्रभवती गान्धारी” इत्यन्वयः । “मन्युशोकौ तु शुक् स्त्रियाम्” इत्यमरः ॥ ४० ॥

अष्टादशाक्षौहिणीति—अष्टादशाक्षौहिणीनां स्वामिन् ! इत्यर्थः । “अक्षौहिणी” इति पदम् ‘अक्षादूहिन्यामुपसङ्ख्यानम्’’ (६ ।

दुर्योधनः-(अन्य)न्ददामि खलु वृत्तान्तम्। अनेन वृत्तान्तेन व्रीलितोऽस्मि।

धृतराष्ट्रः—एहि पुत्र! अभिवादयस्व माम्।

राजा—अयमयमागच्छामि (उत्थानं रूपयित्वा पतति) हा धिक्! अयं मे द्वितीयः प्रहारः। कष्टं भोः!

हृतं मे भीमसेनेन गदापातकचग्रहे।
सममूरुद्वयेनाद्य गुरोः पादाभिवन्दनम्॥ ४१॥

---

१। ८६) इति वार्तिकेन अक्षशब्दादूहिनीशब्दे परे पूर्वपरयोरचोर्वृद्ध्येकदेशे सिद्धम्। अक्षौहिणी=सेनाविशेषः। तथा चोक्तम्—

अक्षौहिण्यामित्याधिकैः सप्तत्याह्यष्टभिः शतैः।
सङ्ख्यायुक्ता सहस्राणि गजानामेकविंशतिः॥
एवमेव रथानान्तु सङ्ख्यानं कीर्त्तितं बुधैः।
पञ्चषष्टिः सहस्राणि षट्शतानि दशैव तु॥
सङ्ख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः।
नृणां शतसहस्रन्तु सहस्राणि नवैव तु॥
शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः॥ इति।

व्रीडितोस्मि=लज्जितोऽस्मि। स्पष्टमन्यत्। दुर्योधनस्यायमाशयो भाति यद्—"महाराज" इति पित्रोः सम्बोधितोऽस्मि पराजितैश्वर्यश्चाहमनेन लज्जितो भवामीति।

"हृतम्" इति—अद्य भीमसेनेन गदापातकचग्रहे=गदाघातपूर्वकशिरो(वाल)ग्रहे सति मे=मम ऊरुद्वयेन सममेव गुरोः=पित्रोः पदाभिवन्दनम्=पादयोश्चरणयोरभिवन्दनं नमस्करणं हृतम्=दूरीकृतम्। यथा भीमेन मे ऊरू भग्नौ तथैव गुरुपादाभिवन्दनमपि नाशितं मदीयशक्तिनाशादिति भावः॥ ४१॥

गान्धारी—[क] एत्थ जादा !

देव्यौ-[ख] अय्ये ! इमा ह्म।

गान्धारी-[ग] अण्णेसह भत्तारम्।

देव्यौ-(घ] गच्छामि मन्दभाआ।

धृतराष्ट्रः-क एष भोः ! मम वस्त्रान्तमाकर्षन् मार्गमादेशयति।

दुर्जयः-[ङ] ताद ! अहं दुज्जयो।

धृतराष्ट्रः-पौत्र ! दुर्जय ! पितरमन्विच्छ।

दुर्जयः-(च) परिस्सन्तो खु अहं।

धृतराष्ट्रः-गच्छ, पितुरङ्के विश्रमयिष्यसि।

दुर्जयः-(छ) ताद ! अहं गच्छामि। (उपसृत्य) ताद ! कहिं सि।

राजा-अये अयमप्यागतः। सर्वावस्थायां हृदयसन्निहितः पुत्रस्नेहो मां दहति। कुतः,

दुःखानामनभिज्ञेयो ममाङ्कशयनोचितः।

(क) अत्र जाते !

(ख) आर्ये ! इमे स्वः।

(ग) अन्वेपेथां भर्त्तारम्।

(घ) गच्छामि मन्दभागा।

(ङ) तात ! अहं दुर्जयः।

(च) परिश्रान्तः खल्वहम्।

(छ) तात ! अहं गच्छामि। तात ! कुत्रासि।

"अन्वेपेथाम्"=गवेपयेथामित्यर्थः। "अन्वेषयेथाम्" इति पाठः समीचीनो भाति। स्पष्टमन्यत्।

"दुःखानाम्" इति। दुःखानाम्=कष्टानाम्, अनभिज्ञेयः=

निर्जितं दुर्जयो दृष्ट्वा किन्नु मामभिधास्यति ॥ ४२ ॥

दुर्जयः—(क) अअं महाराओ भूमीए उवविट्ठो ।

राजा—पुत्र ! किमर्थमागतः ।

दुर्जयः—(ख) तुवं चिरायसि त्ति ।

राजा—अहो अस्यामवस्थायां पुत्रस्नेहो हृदयं दहति ।

दुर्जयः—(ग) अहं पि खु दे अङ्के उवविसामि (अङ्कमारोहति) ।

राजा—(निवार्य) दुर्जय ! दुर्जय ! भोः ! कष्टम् ।

हृदयप्रीतिजननो यो मे नेत्रोत्सवः स्वयम् ।
सोऽयं कालविपर्यासाच्चन्द्रो वह्नित्वमागतः ॥ ४३ ॥

---

(क अयं महाराजो भूम्यामुपविष्टः ।
(ख) त्वं चिरायसीति ।
(ग) अहमपि खलु ते अङ्के उपविशामि ।

---

अज्ञाता, मम अङ्कशयनोचितः=अङ्के क्रोडे शयनमवस्थानं तस्योचितो योग्यः बालत्वात्, एवम्भूतो दुर्जयः=एतन्नामा मम पुत्रः मां निर्जितम्=भीमहतं दृष्ट्वा=विलोक्य किं नु अभिधास्यति=किं कथयिष्यति । बाल्याद्धेतोरेतादृशं मामालोक्य चकितस्त्रस्तश्च भविष्यतीति तर्कये इति भावः ॥ प्रकृते "अनभिज्ञेय" इति पदं चिन्त्यं भाति ॥ ४२ ॥

पुत्रस्नेहः=सुतप्रीतिः । दहति=ज्वलयाति ।

"हृदये"ति—यः मे हृदयप्रीतिजननः=यो मम पुत्रः हृदयेऽन्तःकरणे प्रीतेः स्नेहस्य जननः उत्पादकः (यश्च) स्वयम्=स्वयमेव परापेक्षां विनैव (मम) नेत्रोत्सवः=दृष्टेः प्रमोदकारी तृप्तिप्रद इत्यर्थः, सोऽयं=सुतः चन्द्रः=शशितुल्यः कालविपर्यासात्=कालविपर्ययात् प्रतिकूलात् कालादित्यर्थः वह्नित्वम्=वह्निभावम्

दुर्जयः—(घ) अङ्के उववेसं किणिमित्तं तुवं वोरसि।

राजा—

त्यक्त्वा परिचितं पुत्र ! यत्र तत्र त्वयास्यताम्।
अद्य प्रभृति नास्तीदं पूर्वभुक्तं तवासनम्॥ ४४॥

दुर्जयः—(क) कहिं णु खु महाराओ गमिस्सदि।

राजा—भ्रातृशतमनुगच्छामि।

दुर्जयः—[ख] मं पि तहिं णेहि।

राजा—गच्छ पुत्र ! वृकोदरं ब्रूहि।

दुर्जयः—[ग] एहि महाराअ ! अण्णेसीअसि।

राजा—पुत्र ! केन।

दुर्जयः—[घ] अय्याए, अय्येण, सव्वेण अन्तउरेणअ।

---

(घ) अङ्के उपवेशं किंनिमित्तं त्वं वारयसि।
(क) कुत्र नु खलु महाराजो गमिष्यति।
(ख) मामपि तत्र नय।
(ग) एहि महाराज ! अन्विष्यसे।
(घ) आर्ययाऽऽर्येण सर्वेणान्तःपुरेण च।

---

आगतः=प्राप्तः वह्निवद्दाहकारी जात इत्यर्थः। हृदयाह्लादकत्व-नेत्राप्यायनकरत्वादिकं चन्द्रसादृश्यं पुत्रे ज्ञेयम्॥ ४३॥

अन्यत् स्पष्टम्।

"त्यक्त्वे"ति—हे पुत्र ! परिचितम्=पूर्वाभ्यस्तम् (अङ्कं) त्यक्त्वा=विहाय त्वया यत्र तत्र=यस्मिन् कस्मिंश्चिदपि स्थाने आस्यताम्=उपविश्यताम्, अद्य प्रभृति=अद्यदारभ्य इदं पूर्वभुक्तम्=प्राक् सेवितम् आसनम्=अङ्करूपं स्थानं तव=कृते नास्ति=नैव योग्यं वर्त्तत इत्यर्थः॥ ४४॥

राजा—गच्छ पुत्र ! नाहमागन्तुं समर्थः ।

दुर्जयः—[ङ] अहं तुवं णइस्सम् ।

राजा—बालस्त्वमसि पुत्र !

दुर्जयः—[परिक्रम्य] [च] अय्या अअं महाराओ ।

देव्यौ—[क] हा ! हा ! महाराओ ।

धृतराष्ट्रः—क्वासौ महाराजः ।

गान्धारी - [ख] कहिं मे पुत्तओ ।

दुर्जयः—[ग] अअं महाराओ भूमीए उवविट्ठो ।

धृतराष्ट्रः—हन्त ! भोः ! किमयं महाराजः ।

यः काञ्चनस्तम्भसमप्रमाणो
लोके किलैको वसुधाधिपेन्द्रः ।
कृतः स मे भूमिगतस्तपस्वी
द्वारेन्द्रकीलार्धसमप्रमाणः ॥ ४५ ॥

---

(ङ) अहं त्वां नेष्यामि ।

(च) आर्याः ! अयं महाराजः ।

(क) हा ! हा ! महाराजः ।

(ख) कुत्र मे पुत्रकः ।

(ग) अयं महाराजो भूम्यामुपविष्टः ।

---

"यः" इति—यो लोके काञ्चनस्तम्भसमप्रमाणः=काञ्चनस्तम्भः सुवर्णस्थूणा तत्समं प्रमाणं यस्य सः सुवर्णस्तम्भसदृशः किलेति निश्चये एकः=अद्वितीयः वसुधाधिपेन्द्रः=वसुधाधिपाः राजानस्तेषामिन्द्रोऽधिपतिः चक्रवर्तीत्यर्थः आसीदितिशेषः । सः मे=मम पुत्रः तपस्वी=वराकः भूमिगतः=भीमगदया भग्नोरुत्वात् पृथिव्यां पतितः द्वारेन्द्रकीलार्धप्रमाणः=द्वारे ( पिधानार्थं ) यद्

गान्धारी—(घ) जाद ! सुयोधण ! परिस्सन्तोऽसि।

राजा—भवत्याः खल्वहं पुत्रः।

धृतराष्ट्रः—केयं भोः !

गान्धारी—(ङ) महाराअ ! अहमभीदपुत्तप्पआइणी।

राजा—अद्योत्पन्नमिवात्मानमवगच्छामि। भोस्तात ! किमिदानीं वैक्लव्येन।

धृतराष्ट्रः—पुत्र ! कथं विक्लवो भविष्यामि।

यस्य वीर्यबलोत्सिक्तं संयुगाध्वरदीक्षितम्।
पूर्वं भ्रातृशतं नष्टं त्वय्येकस्मिन् हतं हतम्॥ ४६॥
(पतति)

राजा—हा धिक् ! पतितोऽत्रभवान्। तात ! समाश्वासयाऽत्रभवतीम्।

धृतराष्ट्रः—पुत्र ! किमिति समाश्वासयामि।

---

(घ) जात ! सुयोधन ! परिश्रान्तोऽसि।

(ङ) महाराज ! अहमभीतपुत्रप्रदायिनी।

---

इन्द्रकीलम्=अर्गलाविशेषः ("होडा" इति भाषा) तस्य यदर्धमर्धभागस्तत्समं प्रमाणं यस्य सः, भग्नोरुत्वाद् भुग्नगात्र इत्यर्थः, कृतः भीमेनेतिशेषः।

अभीतपुत्रप्रदायिनी=शूरपुत्रोत्पादिनीत्यर्थः।

उत्पन्नमिवेति—छलद्वारा भीमेन भग्नोरोर्ममाद्यापि निर्भीकत्वं शौर्यञ्चापि भावः। वैक्लव्येन=शोकेनेत्यर्थः। धृतराष्ट्रः शोकार्त्तः सन्नाह—"कथम्" इति। "यस्ये"ति—

यस्य तव वीर्यबलोत्सिक्तम्=वीर्यं हृदयसत्त्वमोजः, बलं शरीर-

राजा—अपराङ्मुखो युधि हत इति । भो स्तात! शोक-निग्रहेण क्रियतां ममानुग्रहः ।

त्वत्पादमात्रप्रणताग्रमौलि-
ज्वलन्तमप्यग्निमचिन्तयित्वा ।
येनैव मानेन समं प्रसूत-
स्तेनैव मानेन दिवं प्रयामि ॥ ४७ ॥

---

सामर्थ्यं वीर्यबलाभ्यामुत्सिक्तमुद्धतम्, संयुगाध्वरदीक्षितम्=संयुगाध्वरे सङ्ग्रामयज्ञे दीक्षितं प्राप्तदीक्षं प्रविष्टमिति यावत् भ्रातृशतं पूर्वं नष्टम्=मृतम् (सम्प्रति) त्वयि=एकस्मिन् हते=हिंसिते सति हतम्=सर्वमेव नष्टमित्यर्थः । यदि त्वमजीविष्यः तदान्येषु तव भ्रातृषु हतेष्वपि मम किञ्चिदपि नष्टं नाभविष्यदिति धृतराष्ट्राशयो भाति ॥ ४६ ॥ स्पष्टमन्यत् ।

दुर्योधनः शोकसन्तप्तं पितरमाह—"अपराङ्मुख" इति । शूराश्चेद्रणे म्रियेरन्, न ते शोकपात्रं भवन्तीति भावः । शोक-निग्रहणे=इष्टवस्तुनो विनाशाद् विह्वलीभावश्चित्तस्य शोकः, तस्य निग्रहो वशीकरणं परित्याग इत्यर्थः तेन, अनुग्रहः=अनुकम्पा ।

"त्वत्पादे"ति—त्वत्पादमात्रे=भवदीयचरणमात्रे (नान्यस्मि-न्कस्मिंश्चिदपीति भावः) प्रणता प्रह्वीभूतोऽग्रमौलिरुत्तमाङ्गं यस्य सोऽहं ज्वलन्तम्=इन्धमानपि अग्निम्=वह्निम् अचिन्तयित्वा=अनालोच्य, येनैव मानेन=अभिमानेन समं=सह प्रसूतः=उत्पन्नः तेनैव मानेन सह दिवं=स्वर्गं प्रयामि=अकातराणां रणे हतानां स्वर्गप्राप्तिर्भवतीति शास्त्रम् । अतोऽभग्नमानस्य शूरस्य मम कृतेऽत्रभवता शोको न कर्त्तव्य इत्याशयो वीरदुर्योधनस्य । उपजातिः ॥ ४७ ॥

धृतराष्ट्रः—

वृद्धस्य मे जीवितनिस्पृहस्य
निसर्गसम्मीलितलोचनस्य ।
धृतिं निगृह्यात्मनि सम्प्रवृत्त-
स्तीव्रः समाक्रामति पुत्रशोकः ॥ ४८ ॥

बलदेवः—भोः ! कष्टम् ।

दुर्योधननिराशस्य नित्यास्तमितचक्षुषः ।
न शक्नोम्यत्रभवतः कर्तुमात्मनिवेदनम् ॥ ४६ ॥

राजा—विज्ञापयाम्यत्रभवतीम् ।

गान्धारी—(क) भणाहि जाद ! ।

---

(क) भण जात ! ।

---

"वृद्धस्ये"ति—वृद्धस्य=जराजीर्णस्य, जीवितनिस्पृहस्य=जीविते इच्छारहितस्य मुमूर्षोरित्यर्थः तथा—निसर्गसम्मीलितलोचनस्य= निसर्गेण जन्मनैव सम्मीलिते लोचने नेत्रे यस्य जन्मान्धस्य एवम्भूतस्य मे=मम धृतिम्=धैर्यं निगृह्य=गृहीत्वा विनाश्येत्यर्थः । तीव्रः=तीक्ष्णः पुत्रशोकः=शतपुत्रमरणजनिताश्चित्तस्य विह्वलीभावरूपः शोकः आत्मनि=हृदये समाक्रामति=बलादेव प्रविशतीत्यर्थः । शोकस्य निग्रहणेऽसमर्थोऽस्मीति भावः ॥ ४८ ॥

"दुर्योधने"ति—दुर्योधननिराशस्य=दुर्योधने निराशस्य अवलम्बशून्यस्य, तथा—नित्यास्तमितचक्षुषः=नित्यं सदैव अस्तमिते दर्शनशक्तिशून्ये चक्षुषी यस्य सः तस्य जन्मान्धस्य अत्रभवतः= पूज्यस्य आत्मनिवेदनम्=स्वात्मसमर्पणं कर्तुं न शक्नोमि=नैव समर्थो भवामि । त्वत्पुत्ररक्षणे उपकारशून्यत्वादिति भावः ॥ ४६ ॥

विज्ञापयामि=निवेदयामि । अत्रभवतीम्=पूज्याम् ।

राजा—

नमस्कृत्य वदामि त्वां यदि पुण्यं मया कृतम्।
अन्यस्यामपि जात्यां मे त्वमेव जननी भव ॥ ५० ॥

गान्धारी-(ख) मम मणोरहो खु तुए भणिदो।

राजा—मालवि! त्वमपि शृणु।

भिन्ना मे भ्रुकुटी गदानिपतितै[र्यो ऽर्या]युद्धकालोत्थितै-
र्वक्षस्युत्पतितैः प्रहाररुधिरै र्हारावकाशो हृतः।
पश्येमौ व्रणकाञ्चनाङ्गदधरौ पर्याप्तशोभौ भुजौ
भर्त्ता ते न पराङ्मुखो युधि हतः किं क्षत्रिये! रोदिषि ॥५१॥

(ख) मम मनोरथः खलु त्वया भणितः।

"नमस्कृत्य" इति। (हे मातः!) अहं त्वां नमस्कृत्य वदामि=भणामि, यदि मया पुण्यं कृतम्=धर्मोऽनुष्ठितः तदा अन्यस्यामपि जात्याम्=जन्मान्तरेऽपि त्वमेव=भवती एव मे जननी=माता भव ५०॥ मनोरथः=सङ्कल्पः।

दुर्योधनः स्वराज्ञीं प्रत्याह—"भिन्ना" इति। युद्धकालोत्थितैः=सङ्ग्रामकालभवैः गदानिपतितैः=गदापातैः मे=मम भ्रुकुटी=भ्रूकुटिः भिन्ना=स्फुटिता अस्तीति शेषः।

'गदानिपतनै' रिति पाठमुत्तमं मन्ये। वक्षसि=वक्षःस्थले उत्पतितैः=उच्छलितैः प्रहाररुधिरैः=गदादिप्रहारोत्पन्नै रक्तैः हारावकाशः=हारस्य मुक्ताहारस्यावकाशः स्थानं हृतो दूरीकृतः सर्वमुरःस्थलं रुधिराप्लुतं वर्त्तत इत्यर्थः।

व्रणकाञ्चनाङ्गदधरौ=व्रणः क्षतमेव काञ्चनाङ्गदं सौवर्णं भुजभूषणविशेषः तस्य धरौ, अत एव—पर्याप्तशोभौ=पर्याप्ता पूर्णा शोभा ययोस्तौ भुजौ=बाहू पश्य=आलोकय। ते=तव भर्त्ता=स्वामी युधि=सङ्ग्रामे पराङ्मुखः=दत्तपृष्ठः सन् न=नैव हतः=घातितः,

देवी—(ग) बाला एसा सहधम्मचारिणी रोदामि।

राजा—पौरवि! त्वमपि शृणु।

वेदोक्तैर्विविधैर्मखैरभिमतैरिष्टं धृता बान्धवाः
शत्रूणामुपरिस्थितं प्रियश(तंन?तान्न) व्यंसिताः संश्रिताः।
युद्धेऽष्टादशवाहिनीनृपतयः सन्तापिता निग्रहे-
मानं मानिनि! वीच्य मे नहि रुदन्त्येवंविधानां स्त्रियः५२

(ग) बाला एषा सहधर्मचारिणी रोदामि।

---

एवं व्यतिकरे सति—हे! क्षत्रिये!=क्षत्रियवशप्रसूते (मालवि!) त्वं किम्=किमर्थं रोदिषि=विलापं करोषि।

क्षत्रियवंशप्रसूतत्वात्त्वया हर्षस्थाने शोको न विधेय इति भावः। शार्दूलविक्रीडितम् ॥ ५१ ॥

"सहधर्मचारिणी"ति कथनेन स्वं सतीत्वं प्रकटीकरोति।

"वेदोक्तै"रिति। (हे पौरवि!) वेदोक्तैः=वेदविहितैः विविधैः= नानाप्रकारैरनेकैरिति यावत् मखैः=यज्ञैरग्निष्टोमादिभिः, इष्टम्= देवाः पूजिता इत्यर्थः। तथा—बान्धवाः=सगोत्राः धृताः=पालिताः पोषिताश्चेत्यर्थः [मम प्रियशतम्=प्रियाणां भ्रातृणां शतं प्रियशतं शत्रूणाम्=वैरिणाम् उपरि स्थितम्=शिरःस्थितमासीत् मम भ्रातृभिः सर्वे शत्रवो जिता एषोऽपि ममैव प्रभाव इत्यर्थः, तथा— संश्रिताः=आश्रिता जनाः=ये मम शरणमायाताः ते न=नैव व्यंसिताः व्याहताः परित्यक्ता इति] यावत्।

अस्मद्भावनया तु—"मया शत्रूणामुपरिस्थितम्, तथा— संश्रिताः जनाः प्रियशतात्=नानाविधात् इष्टात्पदार्थात् न व्यंसिताः= नैव शून्यीकृताः यद्यस्य प्रार्थितं तत्तत्तस्मै दत्तमेवेति" योजना समीचीना भाति। शतशब्दोऽत्र सङ्ख्यापरो नास्ति।

युद्धे=सङ्ग्रामे अष्टादशवाहिनीनृपतयः=अष्टादशसङ्ख्यानां सेनानां राजानः, निग्रहे=शस्त्रादिना रोधे सन्तापिताः=पीडिताः एवं-

पौरवी-(क) एक्ककिदप्पवेसणिच्चआ ण रोदामि।

राजा-दुर्जय! त्वमपि शृणु।

धृतराष्ट्रः—गान्धारि! किन्नु खलु वक्ष्यति।

गान्धारी-(ख) अहं पि तं जेव्व चिन्तेमि।

राजा-अहमिव पाण्डवाः शुश्रूषयितव्याः, तत्रभवत्या श्चाम्बायाः कुन्त्या निदेशो वर्तयितव्यः। अभिमन्योर्जननी द्रौपदी चोभे मातृवत् पूजयितव्ये। पश्य पुत्र!

श्लाघ्यश्रीरभिमानदीप्तहृदयो दुर्योधनो मे पिता

(क) एककृतप्रवेशनिश्चया न रोदिमि।

(ख) अहमपि तदेव चिन्तयामि।

विधोऽहमस्मीत्याशयः। अतो हेतोः हे! मानिनि=मानरक्षिके! क्षत्रिये! मे=मम मानम्=गर्वं वीक्ष्य=पर्यालोच्य त्वया शोको न कर्त्तव्य इति शेषः, यतः एवंविधानम्=मानिनां राज्ञां क्षत्रियाणां स्त्रियः=नार्यः नहि रुदन्ति=विलापं न कुर्वन्ति प्रत्युत क्षात्रतेजः प्रभावेण हृष्टाः सञ्जायत इति भावः।

"सगोत्र बान्धवज्ञातिबन्धुस्वस्वजनाः समा" इत्यमरः। अस्य द्वितीयः पादो भ्रष्टपाठत्वाद् यथामति व्याख्यातः, पण्डितास्तु प्रमाणम्। "व्यंसिता" इति व्युपसर्गात्—"अंस समाघाते" इति धातोर्निष्पन्नं क्तान्तम्, उपसर्गप्रभावेण यथेष्टमर्थः। शार्दूल० ॥ ५२ ॥

एककृतेति—एकस्तुल्यः कृतः प्रवेशनिश्चयः (वह्नौ) प्रवेशनिश्चयः सतीधर्मो यथा सा तादृशी अहं न रोदिमि=नैव विलापं करोमि।............

शुश्रूषयितव्याः=शुश्रूषितव्याः सेवनीया इत्यर्थः। निदेशः=नियोगः वर्त्तयितव्यः=करणीयः। स्पष्टमन्यत्।

"श्लाघ्यश्री"रिति--श्लाघ्या प्रशंसनीया श्रीः राष्ट्रसम्पत्ति-

तुल्येनाभिमुखं रणे हत इति त्वं शोकमेवं त्यज।
स्पृष्ट्वा चैव युधिष्ठिरस्य विपुलं चौमापसव्यं भुजं
देयं पाण्डुसुतैस्त्वया मम समं नामावसाने जलम् ५३॥

बलदेवः—अहो वैरं पश्चात्तापः संवृत्तः। अये शब्द इव,

सन्नाहदुन्दुभिनिनादवियोगमूके
विचिप्तबाणकवचव्यजनातपत्रे।
कस्यैष कार्मुकरवो हतसूतयोधे
विभ्रान्तवायसगणं गगनं करोति॥ ५४॥

---

यस्य सः श्लाघ्यश्रीः=परमैश्वर्यवान् तथा — अभिमानदीप्तहृदयः= अभिमानेन स्वात्मगौरवेण दीप्तं प्रज्वलितं हृदयं मनो यस्य स तादृशः मानैकधन इत्यर्थः, एवंविधः दुर्योधनः नाम मे=मम पिता= जनकः तुल्येन=समबलेन भीमेन अभिमुखम्=सम्मुखं यथा स्यात्तथा ननु भीत्या पराङ्मुखीभूय, रणे=सङ्ग्रामे हतः=घातित इति=हेतोः त्वम्=त्वमपि एवम्=मम विरहजं शोकम्=चिन्तां त्यज= दूरीकुरु। किञ्च — युधिष्ठिरस्य=धर्मपुत्रस्य राज्ञः विपुलम्=विशालं चौमापसव्यम्=चौममुपनीतमपसव्यं यत्र तं भुजम्=बाहुं स्पृष्ट्वा= सङ्गत्य मम नामावसाने=प्राणत्यागे सति पाण्डुसुतैः=पाण्डुतनयैः समम्=सार्धमेव त्वयाऽपि जलम्=तिलतोयाञ्जलिरूपं तर्पणवारि देयम्=अर्पणीयम्। तैः सह मिलित्वैव ममौर्ध्वदेहिकं कृत्यं साधनीयमिति तात्पर्यम्। वृत्तमुक्तमेव॥ ५३॥

"अहो" इत्याश्चर्यम्। यत्पूर्वं वैरमासीद् दुर्योधनस्य सम्प्रति तत्पश्चात्तापरूपेण परिणतमित्यर्थः।

"सन्नाह" इति। "कस्य एष कार्मुकरवो हतसूतयोधे गगनं विभ्रान्तवायसगणं करोति" इत्यन्वयः। एषः=श्रूयमाणः कस्य महायोधस्य कार्मुकरवः=धनुर्ध्वानः हतसूतयोधे=हता मृताः सूताः सारथयो योधाश्च यत्र तादृशे "देशे काले वा" इति शेषः

( नेपथ्ये )

दुर्योधनेनाततकार्मुकेण
यो युद्धयज्ञः सहितः प्रविष्टः ।
तमेव भूयः प्रविशाम्यशून्य-
मध्वर्युणा वृत्तमिवाऽश्वमेधम् ॥ ५५ ॥

बलदेवः—अये ! अयं गुरुपुत्रोऽश्वत्थामेत एवाभिवर्त्तते । य एषः,

स्फुटितकमलपत्रस्पष्टविस्तीर्णदृष्टी
रुचिरकनकयूपव्यायतालम्बबाहुः ।

---

गगनम्=आकाशम्, विभ्रान्तवायसगणम्=विभ्रान्ताः त्रस्ता वायसानां काकानां गणाः सङ्घा यत्र तादृशम्, करोति=विधत्ते । अतिभीतिजनकं धनुषः शब्दं श्रुत्वा गगने त्रस्ताः काका डयन्ते तेनाऽनुमीयते कश्चन महाबली योध एव आयातीति फलितम्। कथम्भूते देशे काले वा—सन्नाहदुन्दुभिनिनादवियोगमूके=सन्नाहानां सङ्ग्रामे ताडितानां दुन्दुभीनां निनादस्य ध्वानस्य यो वियोगोऽभावो युद्धस्य प्रशमत्वात् तेन मूके निःशब्दे, तथा—विक्षिप्तबाण०=विक्षिप्तानि इतस्ततो विकीर्णानि बाण-कवच-व्यजना-तपत्राणि यत्र तास्मिन् इत्यर्थः । वसन्ततिलकम् ॥ ५४ ॥

"दुर्योधन" इति—आततकार्मुकेण=आततं प्रत्यञ्चायामारोपितं कार्मुकं धनुर्येन सः तेन दुर्योधनेन=कुरूणां राज्ञा दुर्योधनेन यः युद्धयज्ञः=युद्धमेव यज्ञः सङ्ग्रामयज्ञः सहितः=मया सहैव प्रविष्टः=प्रारब्ध इत्यर्थः, तमेव=युद्धयज्ञं भूयः=पुनः अध्वर्युणा=अध्वर्युनामकेन अशून्यम्=अराहितं वृत्तम्=समाप्तम् अश्वमेधम्=अश्वमेधाख्यं यज्ञमिव प्राविशामि=प्रविष्टो भवामि । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥ उपमालङ्कारः ॥ ५५ ॥

बलदेवोक्त्या अश्वत्थाम्नः प्रवेशं सूचयति—"अये" इति ।

सरभसमयमुग्रं कार्मुकं कर्षमाणः
सदहन इव मेरुः शृङ्गलग्नेन्द्रचापः ॥ ५६ ॥

( ततः प्रविशत्यश्वत्थामा )

अश्वत्थामा—(पूर्वोक्तमेव पठित्वा) भो! समरसंरम्भोभयबल-जलधिसङ्गमसमयसमुत्थितशस्त्रनक्रकृत्तविग्रहाः स्तोकावशेषाः श्वासानुबद्धमन्दप्राणाः समरश्लाघिनो राजानः शृण्वन्तु शृण्वन्तु भवन्तः।

---

गुरुपुत्रः=गुरोर्द्रोणाचार्यस्य पुत्रः सुतः "स्फुटिते"ति—स्फुटितकमलपत्रवत्=विकसितपद्मदलवत् स्पष्टे उत्फुल्लिते विस्तीर्णे विशाले दृष्टी नेत्रे यस्य सः, तथा—रुचिकनक०=रुचिरौ मनोहरौ कनकयूपवत्=सुवर्णमययज्ञस्तम्भवत् व्यायतौ विशालौ आलम्बौ दीर्घौ बाहू भुजौ यस्य सः तादृशः, तथा—सरभसम्=सवेगं यथा तथा उग्रम्=भयङ्करं कार्मुकं=धनुः कर्षमाणः=दधानः प्रत्यञ्चायामारोपयन् सन् यः अयम् सदहनः=दहनेन वह्निना सह वर्त्तत इति सदहनः शृङ्गलग्नेन्द्रचापः=शृङ्गे शिखरे लग्न इन्द्रचापः इन्द्रधनुर्यस्य स तादृशः मेरुः=सुवर्णपर्वत इव "वर्त्तत" इति शेषः, सोऽयमश्वत्थामा इत एवाभिवर्त्तत इति सम्बन्धः।

अत्र—मेरुतुल्योऽश्वत्थामा गौरवर्णत्वात्, दहनतुल्ये तस्य दृष्टी, शृङ्गतुल्यौ तस्य भुजौ, इन्द्रचापतुल्यं तस्य कार्मुकमित्येवं रूपं सादृश्यं बोध्यम् ॥ वसन्ततिलकम्। ५६ ॥

पूर्वोक्तम्="दुर्योधनेनाततकार्मुकेण" इत्यादीत्यर्थः।

"समरसंरम्भे"ति-समराय सङ्ग्रामाय संरम्भ उद्योगविशेषो यस्य तादृशे यद् उभयबले पाण्डवकौरवपक्षीये सैन्ये एव जलधी समुद्रौ तयोः सङ्गमसमये संमिश्रणकाले समुत्थितानि समुत्क्षिप्तानि यानि शस्त्राणि तान्येव नक्रा जलजन्तुविशेषाः तैः कृत्ताः छिन्ना विग्रहाः शरीराणि येषां ते, स्तोकावशेषाः=अल्पाव-

छलबलदलितोरुः कौरवेन्द्रो न चाहं
शिथिलविफलशस्त्रः सूतपुत्रश्च नाहम् ।
इह तु विजयभूमौ द्रष्टुमद्योद्यतास्त्रः
सरभसमहमेको द्रोणपुत्रः स्थितोऽस्मि ॥ ५७ ॥

किमनया ममाप्यप्रतिलाभविजयश्लाघया समरश्रिया । ( परिक्रम्य ) मा तावत् । मयिगुरुनिर्वपनव्यग्रे वञ्चितः कुरुतिलकभूतः कुरुराजः । क एतच्छ्रद्धास्यति । कुतः,

शिष्टाः, श्वासानुबद्धमन्दप्राणाः=श्वासेन अनुबद्धः अनुषक्तः मन्दप्राणोऽल्पं जीवनं येषां ते किञ्चित् किञ्चित् श्वसन्तः आसन्नमृत्यव इत्यर्थः, समरश्लाधिनः=समरे श्लाघ्याः निर्भीकयुद्धप्रिया नतु कातरा इत्यर्थः, राजानः=भूमिपतयः "राजान" इति विशेष्यपदं सम्बुद्धौ । स्पष्टमन्यत् ।

"छलबले"ति—छलबलदलितोरुः=छलबलेन कपटयुद्धेन दलितौ त्रोटितावरू यस्य स तादृशः कौरवेन्द्रः=कौरवाणां राजा दुर्योधनः नच=नास्मीत्यर्थः ।

तथा—शिथिलविफलशस्त्रः=शिथिलानि कुण्ठतानि विफलानि शत्रुहननेऽसमर्थानि शस्त्राणि यस्य ( परशुरामशापकारणात् ) स तथाविधः सूतपुत्रः=राधेयः कर्णश्च अहं न=न भवामि । तु=किन्तु विजयभूमौ=रणक्षेत्रे उद्यतास्त्रः=सज्जितशस्त्रः अहमेकः=अहमेकाकी एव द्रोणपुत्रः=अश्वत्थामा सरभसम्=सोद्वेगं यथा स्यात्तद्द्रष्टुम्=युद्धाय सज्जं कमपि वीरमालोकितुं स्थितः अस्मि=तिष्ठामीत्यर्थः । "द्रोणपुत्र" इति कथनेन स्वस्य निर्भीकत्व—महाबलशालित्व सकलास्त्रविद्यापारङ्गतत्वादि व्यज्यते । मालिनी ॥५७॥

पाण्डवविजयं विचिन्त्यं स्वाहङ्कारं शिथिलयति "किमनया" इति । "ममापि अनया समरश्रिया किम्" इत्यन्वयः । किमिति

